THE

# KHANDAKHĀDYAKA

AN ASTRONOMICAL TREATISE

BY

## BRAHMAGUPTA

WITH THE COMMENTARY OF CATURVEDA PṚTHŪDAKA SVĀMIN

EDITED BY

PRABODHCHANDRA SENGUPTA, M.A.

LATE PROFESSOR OF MATHEMATICS, BETHUNE COLLEGE, CALCUTTA,
SOMETIME LECTURER IN INDIAN ASTRONOMY AND MATHEMATICS
AT THE CALCUTTA UNIVERSITY.




PUBLISHED BY THE
UNIVERSITY OF CALCUTTA
1941

गणकचक्रचूडामणि-भिल्लमालवकाचार्य-

श्रीमद्ब्रह्मगुप्तकृतं

# खण्डखाद्यकं करणम्

( चतुर्वेद-पृथूदकस्वामिकृत-खण्डखाद्यकविवरण-नामक-भाष्योपेतम् )

कलिकातानगरीस्थ-बेथुनकलेजाख्य-महाविद्यालयस्य भूतपूर्व-
गणिताध्यापकेन तथा कलिकाता-विश्वविद्यालयस्य
भारतीय-गणित-ज्योतिषाध्यापकवरेण,
एम. ए. इत्युपाधिधारिणा
श्रीप्रबोधचन्द्र-सेनगुप्तेन
सम्पादितम्

कलिकाता-विश्वविद्यालय-मुद्रणालयात् प्रकाशितम्
१८६२ शाके, १९४१ ख्रीष्टाब्दे

To

THE MEMORY OF

SIR ASUTOSH MOOKERJEE

THE FOUNDER OF RESEARCH STUDIES

IN THE

CALCUTTA UNIVERSITY

# अथ खण्डखाद्यकस्य विषयानुक्रमणिका

# PREFACE

A translation of Brahmagupta's *Khaṇḍakhādyaka* with notes and illustrations was published in 1934 A.D., as Part I of a complete edition. The Part II containing the Sanskrit text with Pṛthūdaka's commentary is now published. It has not been possible to reconstruct the *Uttara-Khaṇḍakhādyaka* or the supplementary part of the work in which Brahmagupta gave his own corrections to Āryabhaṭa's astronomical constants, new methods and additional topics, to make the *Khaṇḍakhādyaka* itself a complete manual of Hindu Astronomy. In view of this I have thought it proper to include in this publication all the additional verses that are found in the text as used by Bhaṭṭotpala in his commentary on it. These verses are generally of an explanatory character, and do not all appear to be of Brahmagupta's composition.

In preparing the Sanskrit portion of this edition, a photographic copy of the Berlin manuscript, obtained by the Calcutta University, has been used. I had access to another manuscript of the work possessed by the Calcutta University Library ; I have also seen the Deccan College manuscript which was kindly secured for me by Dr. N. R. Ray, Ph.D., Librarian of the Calcutta University Central Library. All these three manuscripts are the same, even in respect of omissions and errors. As I send out this part of my edition of the work to the world, I sincerely express regrets for these and other errors, omissions and misprints, which I could not avoid owing to my own shortcomings and to other causes over which I could have no control.

I have to express my thankfulness to Pandit Babuāji Miśra Jyautiṣācārya, Lecturer, Calcutta University, in the Department of Arts, and my former colleague, who has helped me occasionally in correcting the proof sheets.

CALCUTTA,
*February, 1941.*

P. C. SENGUPTA.

अथ गणकचक्रचूडामणि-भिल्लमालवकाचार्य्य-
श्रीमद्ब्रह्मगुप्तकृतं

# खण्डखाद्यकं करणं

चतुर्वेद-पृथूदकस्वामिकृत-खण्डखाद्यक-विवरण-
नामक-भाष्यसहितं प्रारभ्यते ।

यस्मिन् सर्व्वं यतः सर्व्वमिति वेदविदो विदुः ।
तं प्रणम्य महात्मानं गोविन्दं सर्व्ववन्दितम् ॥
ज्योतिःशास्त्रं नभस्थं च ताराग्रहसमायुतम् ।
व्याख्यास्ये ब्रह्मगुप्तोक्तं करणं खण्डखाद्यकम् ॥

सन्तः श्रेयाधिगमननिमित्तं विघ्नप्रशमनाय शास्त्रारम्भेष्विष्टदेवतानमस्कारं कुर्वन्ति । तदयमपि भिल्लमालवकाचार्य्यो ब्रह्मगुप्तो महादेव-भट्टारक-वरलब्धप्रसादस्त्रिवर्गाभीष्ट-फलप्रदायिनीं ग्रहगतिं संक्षिप्तां स्वसूत्रैः कर्त्तुकाम आचारार्थं भगवतः श्रीमहादेवस्य नमस्कारं चक्रे ।

**प्रणिपत्य महादेवं जगदुत्पत्तिस्थितिप्रलयहेतुम् ।**
**वक्ष्यामि खण्डखाद्यकमाचार्य्यार्य्यभटतुल्यफलम् ॥१॥**

प्रणिपत्य मनोवाक्कायादिभिरवनम्यमानः* अष्टाङ्गं शरीरं भूमौ निधाय शिरसा नमस्कृत्येत्यर्थः । कमित्याह । महादेवमिति । महांश्चासौ देवश्च महादेवः । तं प्रणिपत्य । किम्भूतमित्याह । जगदुत्पत्तिस्थिति-प्रलयहेतुम् । उत्पत्तिः सम्भवः स्थितिः स्थानं प्रलयो विनाशः । जगदुत्पत्तिस्थितिप्रलयास्तेषां हेतुः । जगतः सम्भवस्थानविनाशानां कारणमित्यर्थः । किं करिष्यामीत्याह । वक्ष्यामि किमिति । खण्डखाद्यकमिति । खण्डेन

* रवनम्यमाना in the manuscript.

मिश्रं खाद्यकं खण्डखाद्यकं भक्ष्यविशेषं भुञ्जानस्य सुखं भवति। तथेदमपि करणं गणयितुः स्वल्पेनैव गणितेन ग्रहगतिं सम्पादयतः सुखं भवति। इति वक्ष्यामि किम्भूतमित्याह। आचार्य्यार्य्यभटतुल्यफलम्। योऽसावार्य्यभट-नामाचार्य्यस्तेन यत् प्रणीतं तन्त्रं तदार्य्यभटं तेन सदृशं फलं यस्य तदार्य्यभट-तुल्यफलम्। अथ य एवं "नोदयति" यदि खण्डखाद्यकमाचार्य्यार्य्यभट-तुल्यफलं तदनेन किं प्रयोजनमिति तं प्रत्याह।

प्रायेणार्य्यभटेन व्यवहारः प्रतिदिनं यतोऽशक्यः।
उद्वाहजातकादिषु तत्समफललघुतरोक्तिरतः ॥२॥

आर्य्यभटतन्त्रेण प्रतिदिनं तिथिनक्षत्रादिको व्यवहारः विस्तृतत्वाद् गणितस्य न शक्यते कर्त्तुम्। अ तत्फलसमं स्वल्पेन सूत्रेण गणितेन च ज्ञातवानिति। खण्डखाद्यकमिति। केषु व्यवहारो न शक्यत इत्याह। उद्वाहजातकादिष्विति। आदिग्रहणाद् विवाहजातक-यात्रा-तिथि-नक्षत्र-करण-संक्रान्ति-व्यतीपात-ग्रहणोदयास्तमयशृङ्गोन्नति-समागमादिष्वेतेषु व्यवहार आर्य्यभटस्यातिविस्तृतत्वात् न शक्यते कर्त्तुम्। मया स्वल्पोक्त्या ज्ञातमिति। अधुनाऽर्य्याग्रयेणाहर्गणानयनमाह—

शाकोऽगवसुशरोनोऽर्कगुणश्चैत्रादिमाससंयुक्तः।
त्रिंशद्गुणस्तिथियुतः पृथगिषुसहितो द्विधा भक्तः ॥३॥
पञ्चाम्बुधिनवमनुभिर्लब्धोनो भाजितः षड्गनन्दैः।
लब्धाधिमासकदिनैरधिकोऽधो रुद्रसङ्गुणितः ॥४॥
स्वरनववेदयुतोऽधस्त्र्यगतिथिरुद्रैर्हृतफलविहीनः।
त्रिखनगहृतः फलावमरात्रोनोऽहर्गणोऽर्कादिः ॥५॥

*पुनरप्यधः कार्य्य इत्यर्थः। अधःस्थापितो राशिः त्र्यगतिथिरुद्रैर्हृत इति। त्रयश्चागाश्च तिथयश्च रुद्राश्च त्र्यगतिथिरुद्रास्तैश्च हृतः ।१११५७३।

* Here a considerable part of the commentary has been left out in the manuscripts.

तस्मात् फलं त्र्यगतिथिरुद्रैर्हतफलं तेन फलेन विहीनस्त्र्यगतिथिरुद्रैर्हतफलविहीनः। तृतीयस्थानात् त्रिखनगैः ।७०३। अवाप्तफलोनदिवसः प्रथमराशिरूनः कार्य्यः। एवं सोऽहर्गणोऽर्कादिरिति। अह्नां गणोऽहर्गणः। अर्कादिः। अर्कः आदिर्यस्यासावर्कादिः। अहर्गणश्चार्कादिरिति। दिनसमूह आदित्यादिर्भवतीति वाक्यार्थः।

करणम्। शका नाम म्लेच्छा राजानस्ते यस्मिन् काले विक्रमादित्येन व्यापादिता स कालोऽत्यर्थं प्रसिद्धः। तं कालं वर्षसंख्यं च वर्षैर्ज्ञात्वा ततस्तस्मात् कालाद् अगवसुशराः शोध्याः। अत्रागवसुशराः स्थापिता वेदितव्या अन्यत्रापि यत्र कुत्रचित् सर्व्वत्रापि। पञ्चशतानि सप्ताशीत्यधिकानीत्यर्थः ।५८७। अगवसुशरैरूनः सकलो द्वादशभिर्हतः कार्य्यः। एवंविधः स चैत्रसितादारभ्य ये गता मासास्तैः संयुतः कार्य्यः। तत्र त्रिंशता सङ्गुण्य सितप्रतिपत्प्रभृति यावन्तो व्यतीतास्तिथयस्तैः संयुतः कार्य्यः। एवंविधो राशिः सौरोऽहर्गणो भवति। तमधः कृत्वा पञ्चभिर्युतः कार्य्यः। ततः पुनरप्यधः कृत्वा पञ्चाम्बुधिनवमनुभिर्भजेत्। चतुर्दशसहस्रैर्नवभिः शतैः पञ्चचत्वारिंशदधिकैरित्यर्थः। १४९४५। लब्धं दिवसादि फलं भवति। तत् मध्यस्थापिताद्राशेः संशोधनीयम्। ततस्तस्य राशेः षड्गनन्दैर्भागमपहरेत्। नवभिः शतैः षट्सप्तत्याधिकैरित्यर्थः ।९७६। लब्धं गताधिमासकाः। शेषं सविकलं गताधिमासशेषसंज्ञं भवति। तत्र घटिकास्थाने घटिकासप्तदशकं संयोज्यम्। यस्मात् पुरस्तात् वक्ष्यति। अधिमासावमशेषसंज्ञे भवतः घटिका-सप्तदशमनुभिरभ्यधिके इति। *अथ वर्त्तमानेऽधिमासको भवति। तदा शेषत्रिंशगुणाच्च छेदनायाति। दिनादि अधिमासदिनगणे...मधीत्येव। अधिमासशेषकमेकान्ते स्थापयेत्। तेन उत्तरत्र प्रयोजनं भविष्यति चन्द्रार्कयोः प्रकारान्तरेणानयन इति। ये लब्धा अधिमासास्तान् त्रिंशता सङ्गुण्य सौराहर्गणे प्रथमराशावित्यर्थः संयोज्य स चान्द्रदिनगणो भवति। ततस्तं चान्द्रं दिनगणम् अधः कृत्वा एकादशभिर्गुणयेत्। ततस्तस्मिन् स्वरनववेदाः क्षेप्याः। चत्वारि शतानि सप्तनवत्यधिकानीत्यर्थः ।४९७। ततस्तमधः कृत्वा त्र्यगतिथिरुद्रैर्भजेत्। लब्धेऽपैकेनैकादशभिः सहस्रैः पञ्चभिः

* The manuscript is faulty at this place.

शतैस्त्रिसप्तत्यधिकैरित्यर्थः ।१११५७३। लब्धं दिवसादि फलं मध्यमराशेः संशोध्य शेषं त्रिखनगैर्विभजेत् । सप्तभिः शतैस्त्र्यधिकैरित्यर्थः ।७०३। अवाप्तमवमरात्राणि भवन्ति । शेषं सविकलमवशेषं भवति । तत्र घटिका-चतुर्दशकं योजनीयम् । यस्माद् वक्ष्यति "अधिमासावमशेषे घटिका सप्तदशमनुभिरभ्यधिके इति । ततस्तदेकान्ते स्थापयेत् । लब्धान्यवमरात्राणि चान्द्राद् दिनगणात् संशोध्य सावनोऽहर्गणो भवति ।

*सप्तहृतस्मिन्नहनि दिनपो भवति । ऊनरात्रपातो यस्मिन् काले । तदा तिथिक्षये दिनप एक एव लभ्यते । स चैकादि...भवति । भ्रान्तिर्न कार्य्या । स एकतिथिलुप्तो ज्ञेयः । अथ कियान् कालोऽधिमासस्य पतितस्य पतिष्यतोऽवमरात्रस्य ज्ञातुमिच्छति । तदा येऽधिमासशेषगता दिवसाः तावत्कालोत्थितस्याधिमासस्य गतः । तदेव षडगनन्देभ्योऽपास्य यच्छेषो दिवसादिकालः । तावत्कालेऽधिमासस्य पातो भविष्यति । तथावम-शेषस्य तदवमशेषदिवसाः । तान् कालान् एकादशभिर्विभज्य रवि-दिवसादिकालो भवति । ऊनरात्रस्य पतितस्य वदेवावमशेषं त्रिखनगेभ्यो-ऽपास्य शेषमेकादशभिर्विभज्य लब्धो दिवसादिकालः । तावत् कालेनोन-रात्रस्य पातो भविष्यति ।

अथोदाहरणम् । तद् यथा । शाकः ७८६ तस्मादगवसुशरान् ।५८७। शोध्य शेषं १९९ एतद् द्वादशगुणं जातं २३८८ । अस्मिंश्चैत्रसितादारभ्य मासमेकं गतम् । संयोज्य तत् २३८९ । एतत्त्रिंशता गुणितं ७१६७० । सितप्रतिपत्प्रभृति तिथीन् इमान् ११ संयोज्य जातं ७१६८१ । पञ्चयुतं ७१६८६ । एतत् पृथकस्थं कृत्वा पञ्चाब्धिनवमनुभिर्भागे हृते लब्धं दिवसादि फलं ४।४७।४७॥ अनेन फलेन मध्यमराशिमिमं ७१६८६ न्यूनी-कृतं जातं ७१६८१।१२।१३॥ अस्य षड्गनन्दैर्भागे हृतेऽवाप्ताधिमासाः ७३ । अधिमासशेषं ४३३।१२।१३। तत्र घटिकासप्तदशकं संयोज्य जातं ४३३।२९।१३। एतदुपयुज्येत प्रकारान्तरेणार्कचन्द्रयोरानयने । इति । लब्धाधिमासका दिनीकृता जाता २१९० । एते सौरेऽहर्गणेऽस्मिन् ७१६८१ संयोज्य जातं ७३८७१ । एतदेकादशगुणं जातं ८१२५८१ ।

---

* Ibid.

अथ खरनववेदा भमी ४८७ छिन्ना ८१३०७८ अयमधः स्थाप्यः। अस्य व्यगतिथिवद्रै ।१११५७३। भोगे हृते अवाप्तं फलं दिनादि ७।१७।१४। तन्मध्यराशेरस्मात् ८१३०७८ शोध्यं शेषं ८१३०७०।४२।४६। अस्य त्रिखनगैर्भागे हृतेऽवाप्तमवमरात्राणि ११५६ अवशेषं ४०२।४२।४६। अस्मिन् चतुर्दश घटिकाः संयोज्य जातं ४०२।५६।४६ एतदुपयुज्येत। अवमरात्राणि इमानि ११५६ चान्द्रदिनगणादस्मात् ७३८७१ संशोध्य जातः सावनोऽहर्गणोऽर्कादिः ७२७१५। अस्य सप्तभिर्भागे हृते शेषं ६। एवमर्कात् प्रभृति षष्ठः शुक्रः। अतोऽत्र दिने शुक्रवार इत्येवं यथाकालं सर्वत्रोदाहरणीयमिति। अथाधिमासावमशेषे करणागते यथार्य्यभटतन्त्रकृततुल्ये भवतस्तदर्थमाह।

## अधिमासावमशेषे घटिकासप्तदशमनुभिरभ्यधिके।

अधिमासशेषस्य घटिकासप्तदशकं संयोज्यम्। अवमशेषस्य घटिकाचतुर्दश संयोज्यम्। अतएव सर्व्वमेव व्याख्यातमिति। अथ वक्ष्यमाणेन विधिना यौ चन्द्रोच्चपातावागमिष्यतस्तावार्य्यभटतन्त्रादधिकावागमिष्यतः। यस्मादधिकौ तस्मादूनीकृतावार्य्यभटतुल्यौ भवतस्तदर्थमाह।

## इन्दूच्चचन्द्रपातावूनौ शरदिग्विलिप्ताभिः ॥६॥

करणागताच्चन्द्रोच्चात् पञ्चविलिप्ताः संशोध्याः। करणागताच्चन्द्रपाताद्दश विलिप्ताः संशोध्याः। एवं कृते आर्य्यभटतुल्यौ भवतः इत्यर्थः। अथ वक्ष्यमाणेन विधिना बुधशीघ्रशनैश्चरावधिकावागमिष्यतः आर्य्यभटतन्त्रात्। अङ्गारकौ गुरुश्चोभौ यथार्य्यभटसमौ भवतस्तथाह।

## तिसृभिः शनिर्बुधशीघ्रं द्वाविंशत्या कुजोऽधिको द्वाभ्याम्।
## चतसृभिरधिको जीवोऽहर्राशिकार्य्यभटमध्यसमाः ॥७॥

करणागतात् शनेर्विलिप्तात्रयं शोध्यम्। करणागतात् बुधशीघ्रात् विलिप्ता द्वाविंशतिः शोध्याः। करणागते कुजे विलिप्ताद्वयं देयम्। करणागते जीवे विलिप्ताचतुष्टयं देयमित्यर्थः। एते सर्व्वे आर्य्यभटसमा भवन्ति। एते ग्रहा अर्द्धरात्रिका आगच्छन्ति। पुरस्तात् तात्कालिकीकरणं कथयिष्यामो-

ऽस्मिन्नार्य्यासमासोदाहरणं न कृतं प्रकटार्थत्वात्। इदानीं मध्यमानयनमर्क-बुधसितानां शीघ्रोच्चानयनं च कुजगुरुशनीनामाह।

खखवसुगुणिताद् वसुगुणकृताधिकान्मुनिनखद्विनन्दयमैः।
भगणाद्यर्कबुधसिताः शीघ्रोच्चं कुजगुरुशनीनाम् ॥५॥

वाक्यार्थः। खं च खं च वसवश्च खखवसवः। तैर्गुणितः खखवसुगुणितस्तस्मात्। खखवसुगुणितात्। कुतः अनन्तरप्रस्तुतादहर्गणादित्यर्थः। वसुगुणकृताधिकादिति। वसवश्च गुणाश्च कृताश्च वसुगुणकृतास्तैरधिको वसुगुणकृताधिकस्तस्मात् वसुगुणकृताधिकात्। मुनिनखद्विनन्दयमैरिति। मुनयश्च नखाश्च द्वौ च नन्दाश्च यमौ च मुनिनखद्विनन्दयमास्तैर्मुनिनखद्विनन्दयमैर्भागमपहरेत्। भगणाद्यर्कबुधसिता इति। भगण आदौ यस्य फलस्य तत् भगणादि। अर्कादीनामित्यर्थः। भगणादितत्फलं अर्कबुधसिताः। तदेव शीघ्रोच्चं कुजगुरुशनीनामित्यर्थः।

करणे चत्वारो भेदा भवन्ति मध्यममन्दोच्चपातशीघ्रोच्चाख्यास्तत्रार्कचन्द्रयोः शीघ्रोच्चाभावः रवेः पाताभावः। एवमादित्यस्य भेदद्वयम् मध्यममन्दोच्चाख्यम्। चन्द्रमसः भेदत्रयम् मध्यममन्दोच्चपाताख्यम्। भौमादीनां चत्वारो भेदाः मध्यममन्दोच्चपातशीघ्राख्याः। तेनायमर्थः। य एवार्कमध्यमः स एव बुधो मध्यमः स एव शुक्रो मध्यमः। स एव कुजगुरुशनीनां शीघ्रोच्चम्। अथ भूगोलादुपरि चन्द्रकक्षा तदुपरि बुधकक्षा तदुपरि शुक्रकक्षा तदुपरि रविकक्षा तदुपरि भौमकक्षा तदुपरि गुरुकक्षा तदुपरि शनिकक्षा तदुपरि नक्षत्रकक्षा इत्येवमुपर्य्युपरि कक्षास्थितिः। येषामादित्याद् उपरि कक्षा तेषामादित्यः शीघ्रः। येषां चन्द्रवर्ज्जमादित्याधः कक्षा तथा तेषामादित्यो मध्यमः। अतएवादित्येनागतेन बुधशुक्रौ मध्यमावागतौ भवतः। भौमजीवसौराणां शीघ्रोच्चानि वागतानि भवन्ति तदानयनं व्याख्यायते।

करणम्। इष्टदिनाहर्गणं संस्थाप्य खखवसुभिर्गणयेत्। अष्टभिः शतैरित्यर्थः। ८००। ततस्तस्मिन् वसुगुणकृताः क्षेप्याः। चत्वारि शतानि अष्टत्रिंशदधिकानीत्यर्थः। ४३८। ततस्तं मुनिनखद्विनन्दयमैर्भजेत्। लक्षद्वयेन द्वानवतिभिः सहस्रैः शतद्वयेन सप्ताधिकेनेत्यर्थः। २९२२०७। अवाप्तभगणास्तत्राप्ताः। शेषं द्वादशहतं मुनिनखद्विनन्दयमैर्भजेत्। राशयो-

लभ्यन्ते। शेषं त्रिंशता सङ्गुण्य तेनैव छेदेन भागा लभ्यन्ते ते च भागाः राशीनामधः स्थाप्याः। ततोऽवशिष्टं षष्ट्या सङ्गुण्य तेनैव छेदेन लिप्ता लभ्यन्ते। ताश्च भागानामधः स्थाप्याः। एवमादिग्रहणाद् राशिभाग-लिप्ता विलिप्तातोऽर्कः। स एव मध्यमबुधशुक्रौ। स एव शीघ्रोच्चं कुज-गुरुशनीनामिति।

अथोदाहरणम्। तथेष्टदिनाहर्गणः ७२७१५। खखवसुगुणितो जातः ५८१७२०००। अत्रवसुगुणाङ्कतान्। ४३८। संयोज्य जातं ५८१७२४३८। अस्य मुनिनखद्विनन्दयमरमैभिः २८२२०७ भागे हृते भगण-शुद्धशेषं २२२४५। एतद् द्वादशगुणं जातम् २७८९४०। अस्य मुनिनख-द्विनन्दयमर्भागे हृते राशयः ०। शेषमिदम् २७८९४०। एतत् त्रिंशता गुणितं जातं ८३६८२०० तेनैव भागहारेण लब्धा भागाः २८। शेषं १८६४०४ षष्ट्या सङ्गुण्य जातं १११८४२४०। तेनैव भागहारेण लिप्ता ३८। पुनरपि शेषमिदं ८०३७४। एतत् षष्ट्या गुणितं जातं ४८२२४४० पुनरपि तेनैव भागहारेण विलिप्ताः १६। एवं राशिभागलिप्ता विलिप्ताः स्वे स्वे स्थाने संस्थाप्य जातो मध्यमोऽर्कः।

| |
|---|
| ० |
| २८ |
| ३८ |
| १६ |

एष एव बुधशुक्रौ मध्यमौ। एष एव कुजगुरुशनिशीघ्रोच्चमित्यर्थः। अथ मध्यमचन्द्रानयनम्।

रविगुणतिथिभागयुतः पृथगर्कस्त्रिगुणितादवमशेषात्।
व्यगशशिलब्धांशयुतोऽर्द्धरात्रिको मध्यमश्चन्द्रः ॥६॥

वाक्यार्थः। रविभिर्गुणाः रविगुणाः। रविगुणाश्च तास्तिथयः रविगुण-तिथयः। ताश्च भागा रविगुणतिथिभागाः। तैर्युतः रविगुणतिथिभाग-युतः। कोऽसौ इत्याह। पृथगर्कः द्वितीयस्थानस्थितोऽर्कः इत्यर्थः। त्रिगुणितादवमशेषात्। व्यगशशिलब्धांशयुतः इति। त्रिभिर्गुणितं त्रिगुणितम्। तदवमशेषं च तत्। तस्मात् त्रिगुणितादवमशेषात्। व्यग-शशिलब्धांशयुत इति। वयश्च अगाश्च शशी च व्यगशशिनः। तैर्लब्धाः व्यग-

शशिलब्धाः। त्र्यगशशिलब्धाश्च ते अंशाश्च तदंशैर्यतो लब्धांशयुतः। लब्धेनांशादिना फलेन रवियुक्तो मध्यमश्चन्द्रो भवतीत्यर्थः।

अथ करणम्। अहर्गणे क्रियमाणे मासादारभ्य यावत्यस्तिथयो दत्ता स्ता द्वादशभिर्गुणा भागा भवन्ति। तेषां त्रिंशता भागे हृते राशयो भवन्ति। एवं राशयो भागाश्च द्वितीयस्थानस्थितेऽर्के योजनीयाः। ततोऽवमशेषं पूर्व्वानीतं सविकलं संस्थाप्य तत् त्रिभिः सङ्गुण्य त्र्यगशशिभिर्विभजेत्। त्रिसप्तत्यधिकेन शतेनेत्यर्थः।१७३। अवाप्तं भागादि फलं भवति। रविगुणतिथिभागयुतेऽर्के संयोज्य मध्यमश्चन्द्रो भवति। इत्येवमर्द्धरात्रिकौ मध्यमौ रविचन्द्रावागतौ लङ्कासमयाम्योत्तररेखायामिति।

अथोदाहरणम्। अहर्गणे क्रियमाणे तिथय एतावत्यो दत्ताः ११। एता द्वादशगुणाः १३२। आसां त्रिंशता भागे हृते उपरि राशयो अधोभागा

| | | | | | | |
|---|---|---|---|---|---|---|
| भागा | ४<br>१२ | एते मध्यमार्केऽस्मिन् | ०<br>२८<br>३८<br>१६ | संयोज्य जातं | ५<br>१०<br>३८<br>१६ | पूर्व्वा- |

नीतमवमशेषमिदं ४०२।५६।४६ एतत्त्रिगुणितं जातं १२०८।५०।१८। अस्य त्र्यगशशिभि:।१७३। भागे हृते लब्धा भागाः।६। शेषं षष्ट्या सङ्गुण्य तेनैव १७३ च्छेदेन लिप्ता ५८। पुनरपि शेषं षष्ट्या सङ्गुण्य तेनैव च्छेदेन विलिप्ताः १५ एवं भागादिफलं ६।५८।१५। एतदेकाकर्म्मसंस्कृतेऽर्के ५।१०।३८।१६ संयोज्य जातो मध्यमोऽर्द्धरात्रिकश्चन्द्रमाः ५।१७।३७।३१ एवं सर्व्वत्रोदाहरणीयमिति। अहर्गणादर्कः कृतोऽधुनाहर्गणाच्चन्द्रानयनमाह।

खखरसगुणितात् सशरांशमुनीन्दुकृताधिकात्
त्रिनवगुणाष्टिहृतात्।
भगणादिर्वा हिमांशुर्नवयमतानैः कलारहितः॥१०॥

वाक्यार्थः। युगणादहर्गणाद् इत्यर्थः। खखरसगुणितात्। खं च खं च रसाश्च खखरसाः तैर्गुणितः खखरसगुणितः। तस्मात् खखरसगुणितात्। सशरांशमुनीन्दुकृताधिकादिति। सशरांशाश्च मुनयश्च इन्दुश्च कृताश्च सशरांशमुनीन्दुकृताः। तैरधिकः सशरांशमुनीन्दुकृताधिकस्तस्मात्।

सप्तरांशमुनीन्दुकृताधिकात्। त्रिनवगुणाष्टिहृतादिति—त्रयश्च नव च गुणाश्च अष्टिश्च त्रिनवगुणाष्टयः, तैः हृतः, तस्मात् त्रिनवगुणाष्टिहृतात्। भगणादिः—भगणः आदौ यस्यासौ भगणादिः चक्रादिरित्यर्थः। भगणादिश्चासौ हिमांशुश्च। चक्रादिचन्द्रमा भवतीत्यर्थः। चशब्दोऽत्र प्रकारान्तराय। एवं कृते चन्द्रमा भवतीत्यर्थः। किं विशेषमस्तीत्याह। नवयमतानैः कलारहितः। अहर्गणादाप्तेन लिप्तादिना फलेन पूर्व्वागतचन्द्रमा जनोकार्य्य इत्यर्थः। करणम्। इष्टदिनाहर्गणं संस्थाप्य खखरसैर्गुणयेत्। षड्भिः शतैरित्यर्थः। ६००। ततस्तं सप्तरांशमुनीन्दुकृतैरधिकं कार्य्यम्। चतुर्भिः शतैः सप्तदशाधिकैः घटिकाद्वादशकयुतैरित्यर्थः। ४१७।१२। ततस्तं त्रिनवगुणाष्टिभिर्भजेत्। षोडशभिः सहस्रैस्त्रिभिः शतैस्त्रिनवत्याधिकैरित्यर्थः। १६३९३। लब्धं भगणादिचन्द्रो भवति। भगणशेषं द्वादशभिः सङ्गुण्य तदधस्तात् द्वादशघटिका द्वादशभिरेव गुणयेत्। तेषां षष्ट्या भागे हृते द्वौ चतुर्विंशतिघटिकासहितौ लभ्येते तावुपरि योजयेत्। ततस्त्रिनवगुणाष्टिभिर्भागे हृते राशयो लभ्यन्ते। राशिशेषं त्रिंशता सङ्गुण्य तदधस्तात् चतुर्विंशतिः घटिकाः। ता अपि त्रिंशता गुणयेत्। तेषां षष्ट्या भागे हृते द्वादश लभ्यन्ते तानुपरि योजयेत्। शेषं पूर्व्ववत् तस्येदं करणम् अर्कवदन्येषां ग्रहाणां भौमादीनां राशिभागलिप्ता विलिप्तादिकमित्यर्थः। ततो भूयोप्यहर्गणस्य नवयमतानैर्भागमपहरेत्। चतुर्भिः सहस्रैः नवभिः शतैरेकोनत्रिंशदधिकैरित्यर्थः। ४९२९। अवाप्तं लिप्तादिकं फलं पूर्व्वागते चन्द्रमसि विशोध्य मध्यमोऽर्द्धरात्रिकश्चन्द्रमा भवेत्। अनेन प्रकारेण—

उदाहरणम्। तद् यथाहर्गणः ७२७१५ एषः खखरसगुणितः ४३६२९००० अस्मिन् सप्तरांशमुनीन्दुकृतान् ४१७।१२ संयोज्य जातं ४३६२९४१७।१२ अस्य त्रिनवगुणाष्टिभिः १६३९३ भागे हृते राश्यादिरर्कवच्चन्द्र आगतः ५।१७।५१।१५। (पृथूदककृता इयं गणना भ्रमात्मिका, शुद्धफलमत्र राश्यादिकं ५।१७।५२।१६ इति सम्पादकस्य) भूयोप्यहर्गणस्य ७२७१५ नवयमतानरमीभिः ४९२९ भागे हृते अवाप्तं लिप्तादि १४।४५ (ततो मध्यमचन्द्रः ५।१७।३६।३० पृथूदकगणनयायाति) एतत् पूर्व्वागतं न भवतीत्यस्मात् संशोध्य मध्यमचन्द्रो जातः ५।१७।३७।३१ (अत्र किञ्चिदपि संशोधनं निष्प्रयोजनं यतः कलादिफलमिदमेव १४।४५ प्रथमागताच्चन्द्राद्

५।१७।५२।१६ अपास्य अर्द्धरात्रिको मध्यमश्चन्द्रः पूर्व्वानीतवद्* राश्यादिकः ५।१७।३७।३१) इयमार्य्याभिप्रायेण ब्रह्मगुप्तकृता न भवति। इत्यस्मात् क्रमवद् एवं दिनगणादागतश्चन्द्रमाः चन्द्रार्कानयनन्यायसिद्धत्वाद् आचार्य्येणाभिहितम्। यस्माद् रविगुणतिथिभागोनादवमशेषात्त्रिगुणात् त्र्यगशशिलब्धमंशकादिफलं च मध्यमचन्द्राद्विशोध्यार्को भवति इत्यतो न व्याख्यातमिति। इदानीमहर्गणानयनेऽर्कचन्द्रानयनमाह आर्य्याद्वयेन—

द्विनवरसभक्तमवमावशेषमाप्तदिनादितत्सहितात्।
अधिमासशेषकाच्च त्रिंशद्गुणितादृतुखदिग्भिः ॥११॥
मासदिनप्रथमैक्यं पृथक् त्रयोदशगुणं द्वितीयोनं।
द्वावप्येवं मध्यौ राश्याद्यावर्कचन्द्रौ वा ॥१२॥

वाक्यार्थः। द्विनवरसभक्तमिति। द्वौ च नव च रसाश्च द्विनवरसाः। तैर्भक्तं द्विनवरसभक्तम्। किं तदित्याह। अवमशेषमिति। अवाप्तदिनादीति। अवाप्तं च तद्दिनादि च तद्भागाद्यमित्यर्थः। तेन सहितं तत्सहितं तस्मात्। कस्माद् अपि अधिमासशेषकात्। त्रिंशद्गुणितात् त्रिंशता गुणितं त्रिंशद्गुणितम्। द्विनवरसैरवमशेषादाप्तेन दिनादिनाऽधिमासशेषमधिकं कृत्वा त्रिंशता गुणितमित्यर्थः। तस्माद् ऋतुखदिग्भिरिति। ऋतवश्च खं च दिशश्चार्त्तुखदिशः। ताभिः ऋतुखदिग्भिः। दिनादि अवाप्तमित्यर्थः। मासदिनप्रथमैक्यं मासाश्च दिनानि च मासदिनानि तैः सह प्रथमैक्यं मासदिनप्रथमैक्यमिति। चैत्रसितादारभ्याहर्गणे ये दत्ता मासास्तिथयश्च ताभिरधिकं द्विनवरसैरवमशेषाद् दिनाद्यं कार्य्यमित्यर्थः। पृथक् त्रयोदशगुणमिति। पृथक् द्वितीयस्थानस्थमित्यर्थः। त्रयोदशभिर्गुणं त्रयोदशगुणम्। मासदिनप्रथमैक्यं द्वितीयस्थानगतं त्रयोदशभिर्गुणनीयमित्यर्थः। एवंविधौ राशी ततो द्वितीयेनोनौ द्वितीयोनौ। अधिमासशेषं ऋतुखदिग्भिरवाप्तेन दिनादिना द्वावप्यूनीकार्य्यावित्यर्थः। द्वावप्येवंविधौ। राशिः आदौ ययोस्तौ राश्याद्यौ च तावर्कचन्द्रौ च राश्याद्यावर्कचन्द्रौ। च शब्दोऽत्र प्रकारार्थः।

* The rule is quite correct and there is no reason to doubt that it is an interpolation. Ed.

करणम्। अनेन प्रकारेणाऽऽर्य्योदितयस्य करणम्। इष्टदिनावमशेषं संस्थाप्य तद्दिनवरसैर्विभजेत्। षड्भिः शतैर्द्विनवत्यधिकैरित्यर्थः।६८२। अवाप्तं दिनानि भवन्ति। यान्येव दिनानि त एव भागाः कल्प्याः। शेषं षष्ट्या सङ्गुण्य तेनैव छेदेन लिप्ताः एवं भागादिफलं प्रथमाख्यं स्थापयेत्। ततस्तेन तदवशिष्टमधिमासशेषमधिकं कार्य्यम्। ततस्त्रिंशता सङ्गुण्य ऋतुखदिग्भिः विभजेत्। षडधिकेन सहस्रेणेत्यर्थः।१००६। लब्धं दिनादि भवति। इति तद्दिनाद्येन भागादि परिकल्प्यम्। तस्य द्वितीय इत्याख्या। ततो यावत्संख्यानां तिथीनां वाधिमासशेषक्षते। तावत्संख्या मासा राशयः परिकल्प्याः तिथयश्च भागाः। ततो राश्याद्येन प्रथमाख्ये राशिः संयोज्यः। मासदिनप्रथमैक्यमिति तस्य संज्ञा। ततो मासदिनप्रथमैक्याद् अनष्टाद् द्वितीयाख्यं संशोध्यार्द्धरात्रिकोऽर्कः भवति। अन्यत्र मासदिनप्रथमैक्यं त्रयोदशभिः सङ्गुण्य द्वितीयाख्येनोनं कृत्वाऽर्द्धरात्रिकश्चन्द्रो भवति। अथ वर्त्तमाने अधिमासो भवति। तदाधिमासशेषं षडगनन्दाधिकं कृत्वा तस्मादुक्तवद्द्वितीयाख्यमानेतव्यम्।

अथोदाहरणम्। तद् यथा। अवमशेषम् ४०२।५६।४६ अस्य द्विनवरसैरमीभिः।६८२। भागे हृते दिनादिफलं ०।३४।५६ एतदधिमासशेषेऽस्मिन् ४३३।२८।१२ संयोज्य जातमिदं ४३४।४।८। एतत्त्रिंशता गुणितं जातमिदं १३०२२।४।३० अस्य ऋतुखदिग्भिरमीभिः १००६ भागे हृते दिनादिफलं द्वितीयाख्यमिदं १२।५६।३८ चैत्रसितादारभ्य मासदिनानि। अत्र मासा राशयः १।११ दिनानि भागाः एतान् १।११।०।० प्रथमेऽस्मिन् ०।३४।५६ संयोज्य जातं मासदिनप्रथमैक्यं १।११।३४।५६ अस्माद् द्वितीयाख्यमिदं १२।५६।४० संशोध्य जातो मध्यमोऽर्कः ०।२८।३८।१६। अथ मासदिनप्रथमैक्यं त्रयोदशभिः सङ्गुण्य जातं ६।०।३४।८ अस्माद् द्वितीयाख्ये शोधिते चन्द्रो जातः ५।१७।३७।२८। एवमर्कचन्द्रौ सदृशौ जातौ पूर्व्वागतौ अथाहर्गणादिति। अथार्कचन्द्रयोर्मन्दोच्चानयनमाह—

**भागाशीतिरिनोच्चं शशिनः पादोनकृतशरकृतोनाद्।**
**भगणादिद्विंत्रिरदैर्वसुनवयमनवगुणैः सकलम् ॥१३॥**

वाक्यार्थः। भागानामशीतिर्भागाशीतिः। इनस्य उच्चम् इनोच्चम्।

राशिद्वयमंशकाश्च विंशतिः। अर्कस्य मन्दोच्चमित्यर्थः। शशिनश्चाहर्गणात्। किम्भूतादित्याह। पादोनकृतशरकृतोनात्। पादोनाश्च कृताश्च पादोनकृताः। पादोनकृताश्च शराश्च कृताश्च तैरूनः। पादोनकृतशरकृतोनः। तस्मादहर्गणादित्यर्थः। भगणश्चादौ यस्य तद् भगणादि चन्द्रोच्चं लभ्यते इत्यर्थः। द्वित्रिरदैरिति। द्वौ च त्रयश्च रदाश्च द्वित्रिरदास्तैः द्वित्रिरदैः। वसुनवयमनवगुणैस्तैरहर्गणादाप्तं कलादिकमित्यर्थः। ताभिः कलाभिः सह वर्त्तत इति सकलम्। लिप्तादिना फलेन पूर्व्वागतं चन्द्रोच्चं युक्तं कार्य्यमित्यर्थः।

करणम्। अशीतिभागाः अर्कस्य मन्दोच्चं भवति। अस्य त्रिंशता भागे हृते लब्धं राशिद्वयं विंशतिभागाः २।२०।०।० एतदर्कस्य मन्दोच्चम्। अथ शशिनः तदाहर्गणं संस्थाप्य तस्मात् पादोनकृतशरकृताः संशोध्याः। चत्वारि शतानि त्रिपञ्चाशदधिकानि पञ्चचत्वारिंशद्घटिकाधिकानीत्यर्थः। ४५३।४५। ततोऽवशिष्टं द्वित्रिरदैर्विभजेत्। त्रिभिः सहस्रैः शतद्वयेन द्वात्रिंशदधिकेनेत्यर्थः ।३२३२। लब्धा भगणास्त्याज्याः। भगणशेषात् सविकलादर्कवच्चन्द्रोच्चमानयेत्। ततो भूयोऽप्यहर्गणं संस्थाप्य वसुनवयमनवगुणैर्विभजेत्। एकोनचत्वारिंशद्भिः सहस्रैः शतद्वयेनाष्टनवत्यधिकेनेत्यर्थः। ३९२९८। अवाप्तं लिप्तादि फलं। पूर्व्वागते चन्द्रोच्चे संयोज्य तस्माद् विलिप्तापञ्चकं शोधयेत्। यस्मादुक्तमिति। इन्दूच्चचन्द्रपातावूनौ शरदिग्विलिप्ताभिः। इत्येवं कृतेऽर्द्धरात्रिकं चन्द्रोच्चं भवति।

अथोदाहरणम्। तद्यथाऽहर्गणः ७२७१५। अस्मात् पादोनकृतशरकृतोनात् ।४५३।४५। संशोध्य शेषं ७२२६१।१५। अस्य द्वित्रिरदैरमीभिः ३२३२ भागे हृते भगणशुद्धशेषं ११५७।१५। अस्मात् सविकलाद् द्वादशभिर्गुणितात् छेदहृतादर्कवत् फलं चन्द्रोच्चमिदं ४।८।५४।५। अथ भूयोऽप्यहर्गणस्यास्य ७२७१५ वसुनवयमनवगुणैरमीभिः ३९२९८ भागे हृते लिप्तादिकं १।५१। एतत् पूर्व्वागते चन्द्रोच्चेऽस्मिन् ४।८।५४।५ संयोज्य विलिप्ता पञ्चकं संशोध्य चन्द्रोच्चमिदं ४।८।५५।५१। इदानीं चन्द्रपातानयनमाह—.

द्यगणगुणहीनाद् युगणाल्लब्धं भगणादि शरनवागरसैः।
षड्गिरसाब्धीन्दुशरैः सांशं चक्राच्च्युतं पातः ॥१४॥

वासनार्थः। द्युगणगुणहीनादिति। द्वौ च अगाश्च गुणाश्च द्व्यगगुणास्तैर्हीनः

ह्रगगुणहीनः तस्माद् ह्रगगुणहीनाद्। अहर्गणादित्यर्थः। लब्धं भगणादि भगण आदौ यस्य भगणादि चक्राद्याप्तमित्यर्थः। कैर्लब्धमिति। शर-नवागरसैः शराश्च नव च अगाश्च रसाश्च शरनवागरसास्तैर्लब्धमित्येव। षड्विषुरसाब्धीन्दुशराः तैः सहांशैर्युत इति सांशम्। षड्विषु-रसाब्धीन्दुशरैरहर्गणादाप्तेन अंशादिना फलेन पूर्व्वागतराश्यादिफलमधिकं कार्य्यमित्यर्थः। चक्राच्युतं पात इति। चक्राच्युतं राशिद्वादशकात् पतितमित्यर्थः एवं कृते पातो भवतीत्यार्थ्यार्थः।

करणम्। इष्टदिनाहर्गणं ह्रगगुणहीनं कार्य्यम्। द्वासप्तत्यधिकेन शतत्रयेणेत्यर्थः।३७२। ततोऽवशिष्टं शरनवागरसैर्विभजेत्। षड्भिः सहस्रैः सप्तभिः शतैः पञ्चनवत्यधिकैरित्यर्थः।६७९५। लब्धा भगणा-स्ताराद्याः। एवं राश्याद्यर्कवत् फलं भवति। ततो भूयोऽप्यहर्गणस्य षड्विषुरसाब्धीन्दुशरैर्भागमपहरेत्। लक्षपञ्चकेन चतुर्द्दशभिः सहस्रैः षड्भिः शतैः षट्पञ्चाशदधिकैरित्यर्थः।५१४६५६। अवाप्तं भागादिफलं पूर्व्वागते राश्यादिके फले संयोज्य यद् भवति तद्राशिद्वादशकादपास्य चन्द्रपातो भवति। तस्माद् विलिप्ता दशकं संशोध्यं यस्मादुक्तं चन्द्रोच्च-चन्द्रपातावूनौ शरदिग्विलिप्ताभिरिति। ततस्तस्मात् पञ्चशतिः कलाः संशोध्याः सम्प्रदायावच्छेदाः। पारम्पर्य्येणैवं कृते कर्म्मयोग्यश्चन्द्रपातो भवति।

अथोदाहरणम्। तद्यथा। अहर्गणः ७२७१५। अस्माद् ह्रग-गुणान् इमान् ३७२ संशोध्य शेषं ७२३४३। अस्य शरनवागरसैरमीभिः ६७९५भागे हृते भगणशुद्धशेषमिदं ४३९३। अस्माद् द्वादशादिगुणकारैः खच्छेदेनार्कफलवद् राश्यादिफलमिदं ७।२२।४४।३०। भूयोऽप्यहर्गणस्य ७२७१५ षड्विषुरसाब्धीन्दुशरैरमीभिः ५१४६५६ भागे हृते अवाप्तं भागादिफलमिदं ०।८।२८ एतत् पूर्व्वागते राश्यादिकेऽस्मिन् ७।२२।४४।३० संयोज्य. जातमिदम् ७।२२।५२।५८। एतद्राशिचक्रादस्मात् १२।०।०।० संशोध्य शेषम् ४।७।७।२ अस्माद् विलिप्ता दशकं पञ्चशतिलिप्ताश्च संशोध्य जातोऽहर्रात्रिकश्चन्द्रपातः ४।५।३०।६२ एषः सर्व्वदा कर्म्मयोग्य इति।

अथैतेऽर्कचन्द्रचन्द्रोच्चचन्द्रपाताश्च अर्द्धरात्रिका आगताः। अन्यस्मिन् काले तात्कालिके कर्म्मणि कृते तात्कालिका भवन्ति। देशान्तरविधौ

च लङ्कायाः उत्तरेण या रेखा यावन्मेरुगता एतस्याः अन्यत्र देशान्तरकर्म्मणा कृतेन स्वदेशिका भवन्तीति। तत्र तात्कालिकीकरणं देशान्तरकर्म्म च भुक्तेर्विना न शक्यते कर्त्तुम्। तत्र करणमाचार्य्येण ग्रहानयनन्यायसिद्धमतो न व्याख्यातम्। अस्माभिस्तु बालव्युत्पादनार्थं यत्स्पष्टं प्रदर्श्यते। तत्र दिनानामेकमहर्गणं परिकल्प्य मध्यमग्रहवत् ग्रहस्यैकदैवसिका भुक्तिः कार्य्या। अथोदाहरणम्। अर्कभुक्तिस्तावत् तद्यथा। एक एव अहर्गणः।१। खखवसुगुणितो जातः ८००। अस्य मुनिनखद्विनन्दयमैर्भागे हृते भगणस्थाने ० शेषं द्वादशगुणितं जातं ९६००। तेनैव छेदेन राशिस्थाने ०। शेषमिदं ९६०० त्रिंशता गुणितं २८८००० षष्ट्या सङ्गुण्य तेनैव छेदेन भागे हृते भागाः ०। शेषं २८८००० षष्ट्या ६० सङ्गुण्य तेनैव छेदेन लिप्ताः ५९। शेषं षष्ट्या सङ्गुण्य तेनैव छेदेन विलिप्ता ८। एवं राश्यादिकाऽर्कभुक्तिः ०।०।५९।८

अथ चन्द्रभुक्तिः। एकस्तिथिः।१। द्वादशगुणः।१२। एवं भागा आदित्यभुक्तावस्मिन् ०।०।५९।८ संयोज्य जातं ०।१२।५९।८। तथा तिथ्येकया एकादशावमशेषं भवति।११। एतत्त्रिगुणं ३३। अस्य त्र्यगशशिभिराप्तं भागादि ०।११।२६। एतद्द्विगुणतिथिभागयुतावर्कभुक्तावत्र ०।१२।५९।८ संयोज्य जातं ०।१३।१०।३४। अथ प्रकारान्तरेण भुक्तिः क्रियते। रूपमेकमहर्गणः १। खखरस ६०० गुणितः अस्य त्रिनवगुणाष्टिभिर्हृते भगणास्तत्राज्याः शेषमर्कवद् राश्यादिका कार्य्या चन्द्रभुक्तिः ०।१३।१०।३४।५३। अथ भूयोऽप्यहर्गणस्य नवयमतानैर्भागे हृते न किञ्चित् प्राप्तमिति। एषैव चन्द्रभुक्तिरिति।

अथ प्रकारान्तरेणार्कभुक्तिः क्रियते। तिथिः १। द्वादशगुणः १२। एते भागाश्चन्द्रभुक्तेरस्याः ०।१३।१०।३४ संशोध्य शेषं ०।१।१०।३४। अथाव-मशेषं ११। एतत्त्रिगुणं ३३। अस्य त्र्यगशशिभिर्भागे हृते लब्धमंशादि फलं ०।११।२६। एतत्पूर्व्वागदादस्मात् ०।१।१०।३४। संशोध्य शेषं जाताऽर्क-भुक्तिः ०।०।५९।८।

अथ प्रकारान्तरेणार्कचन्द्रयोर्भुक्ती क्रियेते। तद्यथा। अवमशेषं ११। अस्य द्विनवरसैर्भागे हृते लब्धं दिनादि ०।०।५७। एतद् भागादि परि-कल्प्यम्। एकमेवाधिमासशेषम्। अस्मिन् प्रथममिदं ०।०।५७। संयोज्य

जातं १।०।५७। एतस्मिंश्छद्मं ३०।२८।३०। अस्य ऋतुखदिग्भिर्भागे हृते-ऽवाप्तं द्वितीयाख्यं भागादि ०।१।४८। अथ प्रथमराशावत्र ०।०।५७। मास दिनैक्यं ०।१।०।०। संयोज्य जातं भागादि १।०।५७। अस्माद् द्वितीयाख्य-मिदं ०।१।४८। संशोध्य जातार्कभुक्तिः ०।५८।८। पुनरपि मासदिन-प्रथमैक्यं ०।१।०।५७। पृथक्त्रयोदशगुणं जातं १३।१२।२१। अस्माद् द्वितीयाख्यमिदं ०।०।१।४८ संशोध्य जातं ०।१३।१०।३२। इयं चन्द्रभुक्तिः।

अथ चन्द्रोच्चभुक्त्यर्थमहर्गणः।१। अस्य द्विनिरदैर्भागे हृते भगणाः ०। शेषं १। अस्माद् ग्रहवद्राश्यादिका चन्द्रोच्चभुक्तिः ०।०।६।४०।

अथ चन्द्रपातभुक्त्यर्थमहर्गणः १। अस्य शरनवागरसैर्भागे हृते भगणाः ०। शेषं १। अस्माद् ग्रहवत् पातभुक्तिः कलादिका ३।११।

एवमेकोनषष्टिः लिप्ता विलिप्ताष्टकमादित्यभुक्तिः। शतानि सप्त नवत्यधिकानि लिप्तानां विलिप्ताश्चतुस्त्रिंशत् चन्द्रभुक्तिः। लिप्ताः षट् विलिप्ताश्चत्वारिंशच्चन्द्रोच्चभुक्तिः। लिप्तास्त्रयः विलिप्ता एकादश चन्द्रपात-भुक्तिः। अङ्केनापि लिख्यते—

| रवि | चन्द्र | चन्द्रोच्च | चन्द्रपात |
|---|---|---|---|
| ५९ | ७९० | ६ | ३ |
| ८ | ३४ | ४० | ११ |

एता लिप्ताद्या अर्कचन्द्रचन्द्रोच्चचन्द्रपातानां यथाक्रमं भुक्तयः।

अथ ग्रहस्येष्टकाले तात्कालिकीकरणं व्याख्यायते।

ग्रहस्यांशकलादिका भुक्तिः (ग्रहाद्) विशोध्यातीतेऽह्नि अर्धरात्रिको ग्रहो भवति। अर्धरात्रिदिनप्रमाणसंयोगाहतां भुक्तिं षष्ट्या विभज्याप्तं लिप्तादि फलं ग्रहात् संशोध्य वर्त्तमानेऽह्नि औदयिको ग्रहो भवति। भुक्तेरर्धं विशोध्य माध्याह्निको ग्रहो भवति। वर्त्तमाने दिने अर्धरात्र-प्रमाणाहतां भुक्तिं षष्ट्या विभज्यावाप्तं फलं ग्रहे दत्त्वा एष्यदिने माध्याह्निको ग्रहो भवति। दिनार्धरात्राहतां भुक्तिं षष्ट्या विभज्यावाप्तं फलं ग्रहे दत्त्वा एष्यदिने अस्तमनान्तिकः स्यात्। सकलां भुक्तिं दत्त्वा एष्यदिनेऽर्धरात्रिको ग्रहः स्यात्।

*   *   *   भवाप्तं फलं ग्रहे दत्त्वा तात्कालिको ग्रहो भवति। अथैष्य रात्रगते   *   *   *   *   *

अथ देशान्तरकर्म्म व्याख्यायते। लङ्कात उत्तरेण या रेखा यावन् मेरुगता तस्यां रेखायां ते ग्रहा आगताः। भागे च ते पूर्व्वेणापरेण वा रेखान्तरकर्म्मणा स्वदेशिका भवन्ति। तत्र या रेखा पूर्व्वापरेण योजन-संख्या युज्यते सा न ज्ञायते। रेखापरिज्ञाने सति तदर्थमाचार्य्येणोक्त-मुज्जयिनीयाम्योत्तररेखाया इति। ततोऽप्युज्जयिन्या उत्तरेण न ज्ञायते केषु केषु जनपदेषु आगता इत्येके पौलिशाः पठन्ति।

उज्जयिनीरोहितककुरुजम्बा हिमनिवासिमेरूणां।
देशान्तरं न कार्य्यं तद्रेखा मध्यसंस्थत्वात्॥

इयमार्य्या प्रायेण पुलिशकृता न भवति कुतस्त्वत्वात्। यस्माद्देशान्तर-कर्म्म विना कुरुजम्बा हिमनिवासिनां दृक्ग्रहग्रहणयोरैक्यं न भवति तत्र चार्थे प्रतिजानीमहे निश्चयेन वयम्। अथ देशं परिज्ञातुमिच्छति किं रेखा पूर्व्वेणापरेण वा। तदाभीष्टदेशे स्फुटब्रह्मगणितेन गणयित्वा देशान्तर-कर्म्मणा विना ततो निर्म्मलाम्बारगुटिका आरोप्य निरूपयेत्। यदि करणागतेन ग्रहेण तुल्यं ग्रहणं तदा स्वदेशो रेखायां स्थितः। अथ करणागतात् ग्रहणात् पूर्व्वमेव दृक्ग्रहणं भवति तदा स्वदेशो रेखाया अपरेण ज्ञातव्यः। अथ करणागतात् ग्रहणानन्तरं दृक्ग्रहणं भवति तदा रेखायाः पूर्व्वार्धे ज्ञातव्यमिति। अथ कियद्भिः योजनैरयं देशः पूर्व्वार्द्धेऽपरेण वा ज्ञातुमिच्छति तदा करणागत-ग्रहणदृक्ग्रहणयो-रन्तरे या घटिकास्ताभिः खखाष्टवेदान् सङ्गुण्य षष्ट्या विभज्यावाप्तं देशान्तरयोजनानि भवन्ति। तथाचोक्तं ब्रह्मसिद्धान्ते षोडशाध्याये—

दृग्गणित-ग्रहणयोरन्तरघटिकाफलं ग्रहे मध्ये।
देशान्तरं धनं प्राक् ग्रहणे च क्षयः पश्चात्॥२७॥

ग्रहणान्तरघटिकाभूपरिधिवधं विभाजयेत् षष्ट्या।
फलयोजनेष्ववन्त्याः प्रागथः प्रागपरयोर्देशः॥२८॥

अथ तैर्योजनैर्देशं कर्म्म तदाह।

**उज्जयिनी-याम्योत्तर-रेखायाः प्राग्गृणं धनं पश्चात्।**
**देशान्तरभुक्तिवधात् खखाष्टवेदैः कलाद्यमम्॥१५॥**

वाक्यार्थः। उज्जयिन्योपलक्षिता या याम्योत्तररेखा सा उज्जयिनी-याम्योत्तररेखा तस्या उज्जयिनीयाम्योत्तररेखायाः प्राक् च पूर्व्वदेशेषु ऋणमित्यर्थः। धनं पश्चादिति। अपरादेशेषु धनमित्यर्थः। तत एतदित्याह। देशान्तरभुक्तिवधात् खखाष्टवेदैः कलाद्याप्तमिति। देशान्तरेण भुक्तिवधो देशान्तरभुक्तिवधः देशान्तरयोजनैरिष्टग्रहभुक्तेर्वध इत्यर्थः तस्मात्। खं च खं च अष्टौ च वेदाश्च खखाष्टवेदास्तैः कलाद्याप्तं कला आदौ यस्य फलस्य तत् कलादि, कलादि च तद् आप्तं च। लिप्तादीष्टग्रहस्य फलं भवति इत्यार्य्यार्थः।

करणम्। इष्टदेशे देशान्तरयोजनानि ग्रहभुक्त्या सङ्गुण्य खखाष्ट-वेदैर्विभजेत्। चतुर्भिः सहस्रैरष्टभिः शतैरित्यर्थः। ४८००। अवाप्तं लिप्तादि फलम् भवति। तन्मध्यमे ग्रहे धनमृणं वा कार्य्यम्। कदेत्युच्यते। लेखातः पूर्व्वदेशेषु ऋणमपरदेशेषु धनमिति। एवं कृते देशान्तर-कर्म्मकृतो ग्रहो भवति। रविचन्द्रचन्द्रोच्च-चन्द्रपातभौमबुधशीघ्रजीव-शुक्रशीघ्रसौराणामन्यतमस्य सम्बन्धिन्या भुक्त्या देशान्तरयोजनानां वधः सम्भवतीत्यर्थः।

अथोदाहरणम्। कुरुक्षेत्रे करणागतात् ग्रहग्रहणात् पश्चाद् दृग्ग्रहणं सार्द्धया घटिकया भवति। अतो योजनानि क्रियन्ते। तद्यथा। भूपरिधिरियम्। ४८००। नवत्या पलैः सङ्गुण्य षष्ट्या विभज्य लब्धं ७२००। एषः सार्द्धया घटिकया गुणितो जातः। अस्य षष्ट्या भागे हृते योजनानि कुरुक्षेत्रे। १२०। एवमन्यत्राप्युदाहरणीयमिति। अथ देशान्तरकर्म्म तद्यथा। देशान्तरयोजनानि १२०। अर्कभुक्त्यानया ५९।८ गुणितानि योजनानि ७०९६। खखाष्ट-वेदैर्भागे हृते लब्धं लिप्तादि १।२८। अर्कादस्मात् ०।२८।३८।१६ संशोध्य जातो देशान्तरसंस्कृतोऽर्कः ०।२८।३६।४८। एवं चन्द्रचन्द्रोच्च-चन्द्रपात-भौम-बुध-शीघ्र-गुरु-शुक्र-शीघ्र-सौराणां भुक्तयो यथाक्रमेण मध्यमाः। तद्यथा—सप्त शतानि नवत्यधि-कानि लिप्तानां विलिप्ताश्चतुस्त्रिंशत् चन्द्रस्य। लिप्ताः षट् विलिप्ता-श्चत्वारिंशद् इन्दूच्चस्य। लिप्ताद्वयं विलिप्ता दश चन्द्रपातस्य। एकत्रिंश-ल्लिप्ता विलिप्ताः षड्विंशतिर्भौमस्य। लिप्तानां शतद्वयं पञ्चचत्वारिंश-दधिकं द्वात्रिंशद् विलिप्ताः शीघ्रगतेर्बुधस्य। लिप्ताशतञ्च एकोनषष्टि-

विंलिप्ताः जीवस्य। पञ्चवतिलिंप्ताः सप्त विलिप्ताः शुक्रशीघ्रस्य। द्वे लिप्ते मध्यमभुक्तिः शनेः। अङ्केनाऽपि लिख्यते।

| रवि | चन्द्र | म | बु | गु | शु | श | उ | पा |
|---|---|---|---|---|---|---|---|---|
| ५९ | ७९० | ३१ | २४५ | ४ | ९६ | २ | ६ | ३ |
| ८ | ३४ | २६ | ३२ | ५९ | ७ | ० | ४० | १० |

एता देशान्तरयोजनैरमोभिः ।१२०। गुणिता जाता यथाक्रमेण च ९४८७०।८००।३८०।३७७२।२९४६४।५९८।११५३४।२४०। अत्र अत्र खखाष्टवेदैर्भागे हृते फलानि

| चन्द्र | उ | पा | म | बु | वृ | शु | श |
|---|---|---|---|---|---|---|---|
| १९ | ० | ० | ० | ६ | ० | २ | ० |
| ४५ | १० | ४ | ४७ | ८ | ७ | २४ | ३ |

यदेवार्कस्य तदेव बुधशुक्रयोः। एतानि मध्यमानां ग्रहाणां देशान्तर-कर्म-फलानि कुरुक्षेत्रे सर्व्वेषां शोध्यानि पूर्व्वस्यां रेखातः स्थितत्वाद् देशस्येति।

एवं देशान्तरं स्वदेशे गणकैरुदाहरणीयम्। अधुनाऽर्कस्य स्पष्टी-करणमाह।

पञ्चगुणाः सप्तरसाः शरनन्दाः षोडशेन्दवो गोऽक्षाः।
कृतगुणचन्द्रा राश्यर्द्धलिप्तिकाः पिण्डिताः सवितुः ॥१६॥

अत्र च करणम्। इष्टदेवसिकमिष्टकालिकं मध्यमार्कं संस्थाप्य तत्तस्माद् राशिद्वयं विंशतिभागा अर्कस्य मन्दोच्चं २।२०।०।०। विशोध्य केन्द्रं भवति। तस्माद् वक्ष्यति आचार्य्यः "ग्रहः केन्द्रमुच्चोनः" इति। ततः केन्द्रात् ज्याक्षेत्रं कार्य्यम्। तत्करणमाचार्य्यो वक्ष्यति। विषमे भुक्तस्य समे भोग्यस्येति। तत्र राशित्रयस्य केन्द्रे प्रथमपदमिति संज्ञा। तत्र यावद्राशित्रयं तावद्विषमपदलब्धकेन्द्रम्। ततो यावद्राशिषट्कं तावत् समपदम्। अतो यावद्राशिनवकं तावद्विषमं पदम्। अस्मात् परं यावद् राशिद्वादशकं तावत् समपदम्। एवं विषमपदस्थे केन्द्रे भुक्तात् फलमानेतव्यमिति। समपदस्थे भोग्यादिति। एतदुक्तं भवति केन्द्रं

प्रथमपदे भवति तदा तदेव ज्याकेन्द्रम्। अथ द्वितीये पदे भवति तदा राशिषट्कादपास्य ज्याकेन्द्रं भवति। अथ तृतीये पदे भवति तदा तस्माद्राशिषट्कमपास्य शेषं ज्याकेन्द्रम्। अथ चतुर्थे पदे भवति तदा राशिचक्रा।१२। दपास्य शेषं ज्याकेन्द्रं भवति। एवं ज्याकेन्द्रं कृत्वा तस्मात् फलमानयेत्। तदा विषमे भुक्तस्य समे भोग्यस्येति न्यायेनानीतं फलं भवति। एवं ज्याकेन्द्रस्य राश्यर्द्धे राश्यर्द्धे खण्डकं भवति। अतो राशित्रितये षट् खण्डकानि। पञ्चगुणाद्यानि। राशित्रयादूर्द्धं ज्याकेन्द्रं नास्ति। तत्र प्रथमे राश्यर्द्धे पञ्चगुणाः पञ्चविंशत्। द्वितीये राश्यर्द्धे सप्तरसाः सप्तषष्टिः। तृतीये राश्यर्द्धे शरनन्दाः पञ्चनवतिः। चतुर्थे षोड़शेन्दवः शतं षोड़शाधिकम्। पञ्चमे गोऽर्काः एकोनत्रिंशदधिकं शतम्। षष्ठराश्यर्धे कृतगुणचन्द्राः चतुस्त्रिंशदधिकं शतम्। अङ्केनापि ३५।६७।९५।११६।१२९।१३४। तत्र यावत् संख्यानि केन्द्रस्य राश्यर्द्धानि भुक्तानि भवन्ति तावत् संख्यानि खण्डकानि पञ्चगुणाद्यानि गणयित्वा तावत् संख्ये यत्तत्त्वमिति तदेकान्ते स्थापयेत्। ततो राश्यर्द्धान्यपास्यावशेषं भागादिकं लिप्तापिण्डीकार्य्यम्। तद्भुक्तभोग्यान्तरेण सङ्गुण्य नवभिः शतैर्विभज्यावाप्तलिप्तादिफलं तद्भुक्तखण्डके संयोज्यार्कफलं भवति। करणम्। ज्याकेन्द्रं लिप्तापिण्डीकृत्य नवभिः शतैर्विभजेत्। लब्धाङ्कसंख्यया खण्डकं भवति। शेषं च विकलसंज्ञं भवति। तद् भुक्तखण्डकस्य भोग्यखण्डकस्य चान्तरं कार्य्यं तद्गुणकारं भवति। तदेकान्ते स्थापयेत्। भुक्तार्थं ततो गुणकारेण विकलं सङ्गुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं भुक्तखण्डके संयोज्यार्कफलं भवति। तस्य षष्ट्या भागे हृते भागा भवन्ति। तन्मध्यमार्के धनमृणं वा कार्य्यं तस्माद् वक्ष्यति। "स्वफलमृणं धनं मध्य इति कार्य्यमिति भण्यते।" "षड्राश्यूने केन्द्रे ऋणमधिके धन"मिति। एवं कृते मध्यमोऽर्कः स्फुटो भवति।

अथोदाहरणम्। तद्यथा। देशान्तरसंस्कृतोऽहर्रात्रिको मध्यमार्कोऽयं ।०।२८।३६।४८। अस्मादर्कमन्दोच्चमिदं ।२।२०।०।०। संशोध्य जातं १०।८।३६।४८। एतच्चतुर्थपदस्थितत्वाद् राशिद्वादशकाद् ।१२। अपास्य शेषं केन्द्रमिदं ।१।२१।२३।१२। अस्मात् समे भोग्यस्येति व्याख्यास्यते। एतल्लिप्ता पिण्डीकृतं जातं ३०८३।१२। अस्य नवभिः शतैः

।८००। भागे हृते अवाप्तानि त्रीणि ज्याखण्डकानि पञ्चगुणायानि। तृतीयं शरनन्दाः ।८५। तस्मादिदमवाप्तं भुक्तखण्डं ८५। शेषं विकल-संज्ञमिदं १८३।१२ एतद्भुक्तभोग्यखण्डयोरनयोः ८५।११६ अन्तरेण २१ गुणितं जातं ८०४७।१२। अस्य नवभिः शतैर्भागे हृते अवाप्तं लिप्तादिफलं ८।५६। एतद्भुक्तखण्डकेऽस्मिन् ८५ संयोज्य जातं १०३।५६। अस्य षष्ट्या भागे हृते भागादिफलम् १।४३।५६। एतत् केन्द्रस्य षड्राश्यधिकत्वाद् धनसंज्ञम्। एतन्मध्यमेऽर्केऽस्मिन् ०।२८।३६।४८। संयोज्य जातः स्फुटोऽर्कः कुचषेत्रे १।०।२०।४४।

अथ चन्द्रमसः स्पष्टीकरणमाह।

चन्द्रमसः सप्तनगा वसुमनवो नवनखा रसेषुयमाः।
रसवसुयमला अश्वयमा ग्रहः केन्द्रमुच्चोनः ॥१७॥

करणम्। इष्टदैवसिकमिष्टकालिकं मध्यमं चन्द्रं संस्थाप्य तस्मात् तात्कालिकं स्वमन्दोच्चमपास्य केन्द्रं भवति। तस्मादर्कवत् फलमानेतव्यम्। किन्तु विशेषोऽत्र। तत्र पञ्चगुणायैः फलमानेतव्यम्। अत्रेन्दोः सप्त-नगाद्यैरमीभिः प्रथमाख्ये राश्यर्द्धे सप्तनगाः सप्तसप्ततिः द्वितीये राश्यर्द्धे वसुमनवोऽष्टचत्वारिंशदधिकं शतम्। तृतीये नवनखा नवाधिक-शतद्वयम्। चतुर्थे रसेषुयमाः षट्पञ्चाशदधिकं शतद्वयम्। पञ्चमे रस-वसुयमलाः षडशीत्यधिकं शतद्वयं षष्ठे राश्यर्द्धे अश्वयमाः अश्वत्यधिकं शतद्वयम्। अङ्केनापि लिख्यन्ते। ७७।१४८।२०९।२५६।२८६।२९६। एतैः पूर्व्ववद् ज्याकेन्द्रलिप्ताः पिण्डीकृत्य नवभिः शतैर्विभजेत्। अवाप्ताङ्क-समं खण्डं लब्धं भवति। सप्तनगादीनां तद्भुक्तखण्डं भवति। नवशत-भक्तस्य लिप्तापिण्डस्य यत् शेषं तद्विकलसंज्ञम्। तद् भुक्तभोग्यान्तर-खण्डेन सङ्गुण्य नवभिः शतैर्विभज्यावाप्तं कलादिफलं भुक्तखण्डके संयोज्य चन्द्रफलं भवति। तन्मध्यमचन्द्रमसि धनमृणं वा कार्य्यमिति। कदेति भण्यते। षड्राश्यूने केन्द्रे ऋणमधिके धनमिति। एवं कृते चन्द्रः स्फुटो भवति। ग्रहः केन्द्रमुच्चोन इति। ग्रह एव केन्द्रं भवति। किम्भूत इत्याह। उच्चोनः उच्चेन ऊनः उच्चोनः। सर्व्वस्य ग्रहस्य मन्दकर्म्मणि ग्रहात् मध्यमात् मन्दं विशोध्य मन्दकेन्द्रं भवति।

अथोदाहरणम्। तद्यथा। देशान्तरसंस्कृतः कुरुक्षेत्रे मध्यम-चन्द्रोऽर्धरात्रिकोऽयं ५।१७।१७।४६। अस्मान्मन्दोच्चमिदं ४।८।५५।४१ संशोध्य जातं १।८।२२।५। एतल्लिप्तापिण्डीकृतं जातं २३०२।५। अस्य नवशतैर्भागे हृतेऽवाप्तं २। एतत्सङ्ख्याङ्कसमखण्डमिदं १४८ शेषं ५०२।५ एतद्भुक्तभोग्यान्तरेणानेन ६१ सङ्गुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादि-फलमेतत् ३४।१ भुक्तखण्डेऽस्मिन् १४८ संयोज्य चन्द्रफलं लिप्तादि जातं १८२।१। अस्य षष्ठ्या भागे हृतेंऽशादिफलमिदं ३।२।१। एतत्केन्द्रस्य षड्राश्यूनत्वाद् ऋणम्। अतो मध्यमचन्द्रादस्मात् ५।१७।१७।४६ विशोध्य जातं ५।१४।१५।४५। अस्य भांशोऽर्कफलस्येत्यादि। अर्कफलमिदं १०३।५६ अस्य भांशशिष्टेन। भैः समांशः भांशः। सप्तविंशत्या भागमप-हृत्यावाप्तं लिप्तादि ३।५५। एतत्फलमर्कवद् धनं कृते जातः स्फुटचन्द्रः ५।१४।१९।४०। एवं सर्वत्रोदाहरणीयमिति। अधुना कस्मिन् पदे वर्त्तमानात् केन्द्रात् भुक्तस्य फलमानीयते कस्मिन् पदे भोग्यस्य च। कदा धनं कदा ऋणम्। तथार्कफलेन चन्द्रमसो यत्कर्त्तव्यं तदाह।

विषमे भुक्तस्य समे भोग्यस्य स्वफलस्तथाधनं मध्ये।
भांशोऽर्कफलस्येन्दोः षड्राश्यूनाधिके केन्द्रे ॥१८॥

वाक्यार्थः। विषमे भुक्तस्येति। विषमपदे केन्द्रे प्रथमतृतीयपदयोः स्थित इत्यर्थः। तत्र पदस्य यद् भुक्तं तज्ज्याकेन्द्रमिति। समे भोग्यस्येति। समपदे केन्द्रे द्वितीय-चतुर्थपदयोः स्थित इत्यर्थः। तत्र पदस्य यद् भोग्यं तज्ज्याकेन्द्रमिति। षड्राश्यूने केन्द्रे ऋणम्। अधिके धनमिति। क इति मध्ये। मध्यमग्रह इत्यर्थः। भांशोऽर्कफलस्येन्दोरिति। अर्कफलस्य भैः समोऽंशो भांशः। सप्तविंशतितमो भाग इत्यर्थः। स इन्दोश्चन्द्रमसः अर्ककेन्द्रवशाद् धनमृणं वा कार्य्यः। चन्द्रमसीत्यार्य्यार्थः। इयमार्य्यार्क-चन्द्रयोः स्फुटीकरणे व्याख्याता पुनरपि बालव्युत्पादनार्थं विव्रियते। तद्यथा।

करणम्। यदि प्रथमपदे राशित्रयोनं केन्द्रं भवति तदा तस्मात् फल-मानेतव्यम्। अथ द्वितीये भवति राशिषट्कादपास्य, तृतीये पदे भवति तदा राशिषट्कं विशोध्य; चतुर्थे पदे तदा राशिचक्रादपास्य केन्द्रं भवति।

तस्मात् फलमानेतव्यम्। एवं सर्व्वत्र मन्दकर्म्मणि। क्रान्तिकरणे ज्याकरणे चरदलकर्म्मणि अत्रापि यत्र केन्द्रमुद्दिश्य फलमानीयते तत्रानेनैव प्रकारेण शीघ्रकेन्द्रं वर्ज्जयित्वा। यद्दाणां तत्राभिहित एव प्रयोगः आचार्य्येणेति फलानयनं व्याख्यातम्। भौमादीनामर्कवत् मन्दफलं कार्य्यम्। यस्माद् वक्ष्यति प्राग्वत् शुक्रादीनामिति। धनमृणं वा तेनैव प्रकारेण मन्दकर्म्मणीति। भांशोऽर्कफलस्येन्दोरित्येतद् व्याख्यायते। अर्कस्फुटीक्रियमाणे यत्फलमागतं तत् सप्तविंशत्या विभज्यावाप्तं लिप्तादिफलं भवति। अर्ककेन्द्रे षड्राश्यूने ऋणमधिके धनमिति स्फुटचन्द्रमसि कार्य्यमिति। अत्रोदाहरणं पूर्व्वमेव प्रदर्शितमिति। इदानीं स्फुटीकरणं चन्द्रार्कयोर्भुक्त्योराह।

**पञ्चदशकेन विभजेद् भानुमतो भोग्यमानकं पिण्डम्।**
**शशिनोऽगगुणं वसुभिः क्षयधनधनहानयः स्वगतौ ॥१६॥**

अत्र करणम्। आदित्ये स्फुटीक्रियमाणे यद् भुक्तभोग्यखण्डान्तरं प्राक् स्थापितं तस्य पञ्चदशभिर्भागमपहृत्यावाप्तं लिप्ताद्यमर्कभुक्तिफलम्। चन्द्रमसि स्फुटीक्रियमाणे यद् भुक्तभोग्यखण्डान्तरं प्राक् स्थापितं तस्य सप्तगुणस्याष्टभिर्भागमपहृत्याप्तं चन्द्रभुक्तिफलम्। तच्चार्कचन्द्रयोः स्वभुक्तिफलम्। केन्द्रे प्रथमपदस्थे स्वभुक्त्या ऋणं कार्य्यं द्वितीयपदस्थे धनमिति। एवं कृतेऽर्कचन्द्रयोः स्फुटभुक्ती भवतः। तद् यथा—अर्कभोग्यमानपिण्डकानीमानि ३५।३२।२८।२१।१३।५ एतेभ्यः पञ्चदशहृतेभ्यः फलानि

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| २ | २ | १ | १ | ० | ० | एषामन्यतमं | ० | अर्कफलं मध्यम- |
| २० | ८ | ५२ | २४ | ५२ | २० | | ५२ | |

भुक्तावत्र ५९।८ मकरादिस्थे केन्द्रे रवौ ऋणम्। कर्कादिस्थे धनम्। एवं कृते अर्कभुक्तिः स्फुटा भवति।

अथ चन्द्रस्य भुक्तिः। यथा चन्द्रस्य भोग्यमानकसंज्ञानि षट्खण्डानीमानि ७७।७१।६१।४७।३०।१० एतेभ्यः सप्तगुणेभ्योऽष्टहृतेभ्यः फलानि

| | | | | | | |
|---|---|---|---|---|---|---|
| ६७ | ६२ | ५३ | ४१ | २६ | ८ | मकरादिस्थे चन्द्रकेन्द्रे ऋणम्। |
| २२ | ७ | २२ | ७ | १५ | ४५ | |

कर्कादिस्थे धनम्। एवं कृते चन्द्रभुक्तिः स्फुटा भवति। अत्रोदाहरणं प्रकटार्थत्वात् न प्रदर्शितमिति। अथान्यत्स्फुटान्तरभुक्तिस्फुटीकरणार्थमाह—

गतिभोग्यखण्डकवधाल्लब्धं नवभिः शतै रवीन्दुफलम् ।
प्रागवच्छुक्रादीनां क्षयधनधनहानयः खगते ॥२०॥

वाक्यार्थः । गतिभोग्यखण्डेन वधः । गतिभोग्यखण्डकवधः । तस्माल्लब्धमिति । कैरित्याह । नवभिः शतैरपि किं तत् । रवीन्दुफलम् । रविश्च इन्दुश्च रवीन्दू तयोः फलं रवीन्दुफलम् । प्रागवत् पूर्व्ववदित्यर्थः । अयमभिप्रायः आचार्य्यस्य । यथा न केवलं भोग्यखण्डकवधाल्लब्धम् । नवभिः शतैः शुक्रादीनां स्वफलं कार्य्यम् । भुक्तेर्यावत् मन्दकर्म्मणि अर्कवत्-फलमानेतव्यम् ।

सर्व्वेषामपि पञ्चगुणाद्यैः धनमृणं चार्कवदित्यर्थः । क्षयधनधन हानयः । इति । कार्य्या इत्यर्थं करणं । यद्यपि सामान्येनोक्तं गति-भोग्यखण्डकवधादिति तथापि ग्रहस्य मध्यमभुक्तौ स्वमन्दोच्चमध्यम-भुक्तीनां ग्रहे स्फुटीक्रियमाणे यद् भोग्यखण्डकमाप्नोत् तेन संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं भवति । ततः स्वभुक्तौ धनमृणं वा कार्य्यम् । स्वकेन्द्रे प्रथमपदस्थे ऋणम् । द्वितीयपदस्थे धनम् । तृतीयपदस्थे धनम् । चतुर्थपदस्थे ऋणमिति । स्वमध्यमभुक्तौ एवं कृते स्फुटाभुक्तिर्भवति । तद् यथा अर्कस्य पञ्चगुणाद्यैर्भोग्यखण्डकैर्मध्यमभुक्तिं संगुण्य नवभिः शतैर्विभज्यावाप्तम् । लिप्तादिफलानि यथाक्रमेणेमानि यथाकालं धनमृणं वा कार्य्यम् । कदा धनं कर्कटादौ केन्द्रे । मकरादौ ऋणम् । रविभुक्तावत्र ।५९।८। एवं कृतेऽर्कभुक्तिः स्फुटा भवति ।

| | | | | | |
|---|---|---|---|---|---|
| २ | २ | १ | १ | १ | ० |
| १८ | ६ | ५० | २२ | ३ | २० |

चन्द्रमसः यथा सप्तनगाद्यैः खण्डकैः केन्द्रभुक्तिमिमां ७८३।५४ संगुण्य नवभिः शतैर्विभाज्यावाप्तं कलादिफलं यथाक्रमेणेदं

| | | | | | |
|---|---|---|---|---|---|
| ६७ | ६१ | ५३ | ४० | २६ | ८ |
| ८ | ५५ | १२ | ५८ | १० | ४३ |

यथाकालमन्यतमं फलं स्वकेन्द्रे मकरादि-राशिषट्के ऋणम् । कर्कटादिगे धनं कार्य्यम् । चन्द्रभुक्तावस्यां ७९०।३४ एवं कृते चन्द्रभुक्तिः स्फुटा भवति । एवं शुक्रादीनामिति । स्वमध्यभुक्तिं भोग्यखण्डेन संगुण्य नवभिः शतैर्भागमपहृत्यावाप्तम् । स्वमन्दकेन्द्रवशेन धनमृणं वा कार्य्यम् ।

मर्कवत्। न केवलं भुक्तेः यावद् ग्रहस्यापि मन्दफलमर्कवदानेतव्यम्। ततः इन्दुसुतस्य द्विगुणितमित्यादिकं कार्य्यम्। प्रागवत् शुक्रादीनामिति। इत्यस्मात् वचनात् एव गम्यते। आचार्य्यस्यायमभिप्रायः इति। तथा धनमृणं चार्कवदेव मन्दकर्मणि कार्य्यमिति। ननु वसुधासुतादीनामपि किमर्थमाचार्य्यः पठति यस्तारा ग्रहाणां वारादिगणनया अथ शीघ्रापेक्षया। तथा बुधः शीघ्रः। अथ मन्दापेक्षया तथापि। सौरो मन्द इति। वा ततः यस्मात् शुक्रादीनामित्युक्तम्।

अत्रोच्यते ग्रन्थस्य वक्ष्यमाणापेक्षया शुक्रादीनां कृतार्थ्यो यस्मात्—

शुक्रस्य सूर्यवत् फलमिन्दुसुतस्य द्विसङ्गुणितम्।
भौमस्य पञ्चगुणितं गुरोः स्वरांशेन संयुतं द्विगुणम्।
सौरेर्मनुभागयुतं चतुर्गुणं पञ्चशीनमिति।

अभिप्रायमिति तथा ज्ञापयति। यथा शुक्रादीनां शुक्रभुक्तावपि शुक्रस्य अर्कवत् फलमित्यादिकं कर्म कर्त्तव्यम्। इत्यथोदाहरणम्। तद् यथा। भुक्तिमिमां ५८।८ संशोध्य जाता स्फुटा भुक्तिः ५८।४८* भोग्यखण्डकेनानेन २१ अर्कभुक्तिं संगुण्य नवभिः शतैरासं लिप्तादि १।२२। एतत् केन्द्रस्य चतुर्थपदत्वात् अर्कस्य मध्यमभुक्तेरस्याः ५८।८ संशोध्य जाता स्फुटार्कभुक्तिः ५७।४६।

अथ चन्द्रमध्यमभुक्तेरस्याः ७९०।३४ चन्द्रोच्चभुक्तिमिमां ६।४० संशोध्य जाता केन्द्रभुक्तिः ७८३।५४। एतत् भोग्यखण्डेनानेन ६१ संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं ५३।८। एतत् केन्द्रस्य प्रथमपदस्थितत्वात् चन्द्रमध्यमभुक्तेरस्याः ७९०।३४ संशोध्य जाते स्फुटभुक्तिरियं ७३७।२७। एवं कृते चन्द्रार्कौ भुक्तिसहितौ स्फुटाविमौ रविः ११०।२०।४४ चन्द्रः ५।१४।१९।३६ एवं सर्वत्रोदाहरणीयं गणकैरिति। अथ नक्षत्रतिथिकरणच्छेदः क्रियते तदर्थं दिनप्रमाणमुपयुज्यते। तत्र स्वदेशे चरदलानयनमुपयुज्यते। तत्र कारणमाचार्य्यस्त्रिप्रश्नाध्याये वक्ष्यति। मया चोपयोगित्वादिहैवाभिधीयते। तस्मात् स्वदेशे चरदलानयनमाह—

नवतिथयोऽष्टिविभक्ताः पञ्चरसा वसुहृता दशत्रिहृताः।
विषुवच्छायागुणिता स्वदेशजा चरदलविनाड्यः ॥२१॥

---

* This step taken by Pṛthūdaka is evidently wrong.

वाक्यार्थः। नव च तिथयश्च नवतिथयः षष्टिविभक्ताः षोडशविभक्ता इति। पञ्च च रसाश्च पञ्चरसाः। वसुहृताः अष्टभिर्विभक्ता इति। दशविहृता इति। विषुवच्छायागुणिता इति। विषुवच्छाया विषुवत् छाया, तया गुणिताः। त्रिषु स्थानेषु स्वदेशविषुवच्छाया गुण्यते तथा स्वच्छेदेन विभाजनीया इत्यर्थः। एवं कृते स्वदेशजाश्चरदलविनाड्यः इति स्वदेशाः। काशा इति भवति। चरदलविनाड्यः चरार्द्धचषका भवन्तीत्यर्थः।

करणम्। नव तिथयः एकोनषष्ट्यधिकं शतमित्यर्थः। १५९। एताः स्वदेशविषुवच्छायया संगुण्य अष्टिभिर्विभजेत्। षोडशभिरित्यर्थः। अवाप्तं स्वदेशमेषचरदलचषका भवंतीत्यर्थः। पञ्चरसाः पञ्चषष्टिरित्यर्थः। ६५। एताः स्वदेशविषुवच्छायया संगुण्य वसुभिर्विभजेत्। अष्टभिरित्यर्थः। लब्धं स्वदेशवृषचरदलचषका भवन्ति। दश १०। तांश्च स्वदेशविषुवच्छायया संगुण्य त्रिभिः।३। र्विभजेत् लब्धं स्वदेशमिथुनचरदलचषका भवन्ति।

अथोदाहरणम्। तद् यथा। नव तिथयः। १५९। एताः कुरुक्षेत्र-विषुवच्छाययानया। ७। संगुण्याष्टिभिर्विभज्यावाप्तं ६९। कुरुक्षेत्रे मेष-चरदलचषकाः। अथ पञ्च रसाः। ६५। विषुवच्छाययानया। ७। संगुण्याष्टभि-र्विभजेदवाप्तं ५७। एते वृषचरदलचषकाः। दश एतेविषुवच्छायया ७। संगुण्य त्रिभिर्विभज्यावाप्तं २३। एते तत्रैव मिथुनचरदलचषकाः। एवं स्वदेशिकाश्चरदलचषका इति। अथ तैश्चरखण्डकैः प्रतिदैवसिकं चरदला-नयनं व्याख्यायते। तत्र स्फुटार्कं केन्द्रं परिकल्प्य तस्मात् ज्याकेन्द्रं कार्यम्। ततो ज्याकेन्द्रे राशिर्न भवति तदा ज्याकेन्द्रं लिप्तापिण्डीकृत्य स्वदेशमेषचरदलखण्डेन संगुण्याष्टादशभिः शतैर्विभज्यावाप्तम्। स्वदेशेऽभीष्ट-चरदलखण्डका भवन्ति। इष्टदिने। अथ ज्याकेन्द्रे राशिद्वयं भवति। तदा भागादिकं लिप्तापिण्डीकृत्य स्वदेशमिथुनचरदलखण्डेन संगुण्याष्टा-दशभिः शतैर्विभज्यावाप्तम् इष्टदिने स्वदेशमिथुनचरदलचषका भवन्ति। मेषवृषचरदलखण्डे संयोज्य इष्टदिने चरदलं भवति। अथ इष्टदिने केन्द्रं राशित्रयं भवति तदा चरखण्डानि त्रीणि लभ्यन्ते। एवं राशित्रयात् पूर्वं ज्याकेन्द्रं सम्भवति इति। एवं प्रतिदिनं चरार्द्धकरणमिति।

अत्रोदाहरणम्। तद् यथा। स्फुटोऽर्कः १।०।२०।४४ अत्रैको राशिः अतः प्रथमं चरखण्डकमित्यर्थः। इदं। ६९। अत्र भागादिलिप्तापिण्डीकृतं

२०।४४। एतत् वृषचरदलखण्डेनानेन । ५७। संगुणितं जातम् । ११७४। अष्टादशभिः शतैर्विभज्यावाप्तं न किञ्चित् । तस्मादिदमेव ।६८। तस्मिन् दिने चरदलमिति । अथ तेन प्रतिदिनं चरार्द्धेन यत् कर्म्म तदाह ।

चरदलविनाड़िकागतिकलावधात् खखरसाग्निलब्धकलाः ।
ऋणमुदयेऽस्तमये धनमुत्तरगोलेऽन्यथा याम्ये ॥२२॥

चरदलविनाड़िकानां गतिकलावधः । तद्दैवसिकैः चरदलचरखण्डकैः अभीष्टग्रहभुक्तेर्वध इत्यर्थः । तस्मात् खखरसाग्निलब्धकला इति । खं च खं च रसाश्च अग्नयश्च खखरसाग्नयः तैः लब्धं खखरसाग्निलब्धम्, लब्धं च तत्कलाश्च ता लब्धकलाः लिप्ताद्यमित्यर्थः । ऋणमुदयेऽस्तमये धनमिति । ऋणमुदये औदयिके ग्रहे ऋणमित्यर्थः । अस्तमये धनमिति । अस्तमयिके ग्रहे धनमित्यर्थः । किं तद्धनमिति किं निमित्तमाहोस्विद्विशेषोऽस्तीत्याह । उत्तरगोलमिति मेषादिराशिषट्के वर्त्तमानेऽर्के इत्यर्थः ।

करणम् । अर्द्धरात्रिकग्रहस्य स्वभुक्तिपदं विशोध्यास्तमयिका ग्रहो भवति । तथा स्वभुक्तेः पञ्चिगुणं विशोध्यार्द्धरात्रिकात् औदयिके कर्म्मयोग्यः । चरदलाख्ये कर्म्मणि ननु पुनर्येन प्रकारेण पूर्व्वं व्याख्यातौ तेनेष्टदिनचरदलचरखण्डकैर्ग्रहभुक्तिं संगुण्य खखरसाग्निभिर्विभजेत् । ३६००। त्रिभिः सहस्रैः षट्शतैरित्यर्थः । अथाप्तं लिप्तादिग्रहफलं भवति । तद्धनमृणं वा । औदयिके अस्तमयिके वा कार्य्यम् । मेषादिराशिषट्के वर्त्तमानेऽर्केऽस्तमयेऽर्के धनमुदयिके ऋणम् । तुलादिराशिषट्के वर्त्तमानेऽर्केऽस्तमयिके ग्रहे ऋणमुदयिके धनमेवं पादोनभुक्तित्रिभागोनभुक्त्या ग्रहयोरन्तरं कार्य्यं नन्वन्यथा कस्मिन् काले इति ।

अत्रोदाहरणं निष्प्रयोजनत्वादस्यामार्य्यायां खण्डखाद्ये न प्रदर्शितमिति । इदानीं दिनरात्रिप्रमाणप्रदर्शनार्थमाचार्य्य आह—

पञ्चदशघ्नीनयुक्तास्वरार्द्धनाडीभिरुत्तरे गोले ।
याम्ये युक्तविहीनादिसङ्ख्या रात्रिदिननाड्यः ॥२३॥

वाक्यार्थः। पञ्चदशघटिका इत्येवं हीनयुक्ताश्चरार्द्धनाड़िभिरिति। चरदलमेव चरार्द्धं तस्य नाड़िकास्ताभिरेकस्मिन् देशे पञ्चदशविहीना अन्यस्मिन् प्रदेशे युक्ता इति। एवं कदेति। उत्तरगोल इति। मेषादि-षट्के इत्यर्थः। दक्षिणगोले तुलादिगेऽर्के युतहीना इति। एता एव पूर्व्वस्मिन् प्रदेशे युता अन्यस्मिन् प्रदेशे हीना विपरीता इत्यर्थः। एवं-विधाः सन्त्यः द्विसंगुणाः ।२। द्वाभ्यां गुणिता रात्रिदिननाड्य इति। रात्रेश्च दिनस्य च यथाक्रमेण नाड़िका भवन्तीत्यर्थः।

करणम्। पूर्व्ववद् इष्टदिन-चरकालखण्डका आनीयन्ते। तेषां षष्ट्या भागमपहृत्य चरार्द्धघटिका भवन्ति। तत्र चरदलघटिकास्थानद्वये संस्थाप्य पूर्व्वस्मात् प्रदेशात् चरार्द्धघटिका विशोधयेत्। अपरस्मिन् योजयेत्। मेषादिषट्के वर्त्तमानेऽर्के। अथ तुलादिके राशिषट्केऽर्को भवति तदा पूर्व्वस्मिन् प्रदेशे शोधयेत्। अपरस्मिन् योजयेत्। एवं कृते पूर्व्वस्मिन प्रदेशे रात्र्यर्द्धं भवति। अपरस्मिन् प्रदेशे दिनार्द्धं भवति। ततो रात्र्यर्द्धं द्विगुणीकृत्य रात्रिप्रमाणं भवति। दिनार्द्धं द्विगुणीकृत्य दिन-प्रमाणं भवति।

अथोदाहरणम्। तद् यथा। चरदलखण्डका अत्र दिनेऽस्मिन् ।६८। एतेषां षष्ट्याभागमपहृत्य घटिकादि १।८। अथ पञ्चदशघटिका द्विस्थानस्थाः

| | |
|---|---|
| १५ | १५ |
| १।८ | १।८ |
| १३।५२ | १६।८ |

अत्रार्कस्योत्तरगोलत्वात्। पूर्व्वस्मात् प्रदेशे चरार्द्धं विशोध्य अपरस्मिन् संयोज्य जाते रात्र्यर्द्धदिनार्द्धे। रात्र्यर्द्धद्विगुणं रात्रिप्रमाणमिदं २७।४२। दिनार्द्धद्विगुणं दिनप्रमाणमिदम् ३२।१८। एवमत्र रात्रिदिनप्रमाणे इति। इदानीं नक्षत्रच्छेदानयनमाह।

भाद्यश्विन्यादीनि ग्रहलिप्ताः खखवसुहृता लब्धम्।
भुक्तिहृते गतगम्ये दिवसाः षष्ट्याहते घटिकाः ॥२४॥

वाक्यार्थः। ग्रहलिप्ताः ग्रहस्य लिप्ता खखवसुहृता। खं च खं च वसवश्च तैः हृताः खखवसुहृताः। यल्लब्धं तत् किमित्याह। भाद्य-

श्विन्यादीनि। भानि नक्षत्राणि। अश्विन्यादिर्येषां तान्यश्विन्यादीनि अश्विनीत: भुक्तानि नक्षत्राणि लभ्यन्ते। इत्यर्थ:। गते गम्ये च गतगम्ये तेऽपि भुक्त्याहृते दिवसा: इति। शेषे हे अपि षष्ट्या गुणिते कृत्वा तया स्वभुक्त्या हृता। घटिका भवति इत्यार्थ्यार्थ:।

करणम्। इष्टदिने स्फुटग्रहस्य लिप्तापिण्डं कृत्वा खखवसुभिर्भजेत्। अष्टभि: शतैरित्यर्थ:। अवाप्ताङ्कसमान्यश्विन्यादीनि नक्षत्राणि तावन्ति ग्रहेण भुक्तानि। शेषं गतसंज्ञं भवति। तदेव खखवसुभ्योऽपास्य यदवशिष्यते तत् गम्यसंज्ञं भवति। ततो गतगम्ये च गतं गम्यं च स्फुटभुक्त्या भागमपहृत्य दिवसा भवन्ति। शेषं षष्ट्या संगुण्य तथैव स्फुटभुक्त्या विभज्यावाप्तं घटिका भवन्ति। पुनरपि षष्ट्या संगुण्य तेनैवच्छेदेन विघटिका भवन्ति। एवं दिवसादिकाल आगत:। तावत्काल: तस्य ग्रहस्य तत्र नक्षत्रे प्रविष्टस्य गत:। एवं गम्यादपि भुक्तिहृतात् दिवसा: षष्टिगुणशेषात् भुक्त्याहृतात् घटिका: विघटिका:। एवं दिवसादिकाल: आगत: तावत्-कालेन ततो नक्षत्रात् यातोऽन्यस्मिन् नक्षत्रे इति। चन्द्रस्य च चारवशेन प्रत्यहं नक्षत्रं भवति। तस्मात् स्फुटचन्द्रं लिप्तापिण्डं कृत्वा अष्टभि: शतैर्विभजेत्। लब्धाङ्कसमानि भुक्तनक्षत्राणि भवन्ति। नवेति गतगम्ये च पूर्व्ववद् ज्ञात्वा गतं षष्ट्या संगुण्य चन्द्रस्फुटभुक्त्यावाप्तम्। घटिकाशेषं षष्ट्या संगुण्य तेनैव छेदेनावाप्तं विघटिका:। एवं घटिकादिफले स्थापयेत्। तद् यथा य: काल: कृत:। तस्य छेदो व्याख्यायते। लब्ध-कालोऽर्द्धरात्रिघटिकाभ्य: संशोध्य यदवशिष्यते तदपि दिनप्रमाणात् संशोध्य यावदवशिष्यते तावत् काले लब्धाङ्कनक्षत्रसमनक्षत्रे दिवसे निर्गतमिति वक्तव्यम्। अथ लब्धकालादर्द्धरात्रप्रमाणे वा......अपि संशोध्यते। तदा ते संशोध्य यदवशिष्यते तावत्काले रात्रिशेषे लब्धाङ्कसमनक्षत्रादनन्तरं नक्षत्रस्य प्रवृत्तिर्भवति। एवं गतविकला:। अथ गम्याद् य: काल आगत: तमर्द्धरात्रिघटिकाभ्योऽपास्य यच्छेषं तावत्कालेन रात्रिशेषेण लब्धाङ्कसमनक्षत्रादनन्तरनक्षत्रं तस्य प्रवृत्तिर्भविष्यतीति वेदितव्यम्। अथ लब्धकालोऽर्द्धरात्राधिको भवति तदा तस्मादर्द्धरात्रघटिका विशोध्य यच्छेषं तावत्काले लब्धाङ्कसमनक्षत्रादनन्तरं नक्षत्रं निर्गतमपरस्मिन् दिने इति।

अथ लब्धकालोऽर्द्धरात्रिदिनप्रमाणसंयोगादधिको भवति। तदार्द्धं पश्यर्द्ध-रात्रिदिनप्रमाणं विशोध्य यः कालोऽवशिष्यते तावत्कालो लब्धाङ्कसमादनन्तर-नक्षत्रमपरस्मार्द्धरात्रात् प्रविष्टं वक्तव्यम्। अथ गतं न भवति तदा लब्धाङ्क समनक्षत्रादनन्तरनक्षत्रसार्धरात्रादेव प्रवृत्तिः। गम्ये वा सम्भवाभाव इति।

अथोदाहरणम्। तद् यथा स्फुटचन्द्रमा अयम् ५।१४।१८।२६ एतल्लिप्तापिण्डीकृतं जातम् ८८५८।२६। अस्य खखवसुभिः ।८००। भागे हृतेऽवाप्तम् ११। अश्विनीप्रभृतिद्वादशमभुत्तरा एवमुत्तरा चन्द्रमसा भुक्तेति। शेषं च गतसंज्ञमिदम् २५८।२६ एतत् खखवसुभ्योऽपास्य गम्यसंज्ञमिदम् ५४०।३४ एवमत्रापि भुक्त्या भागं न प्रयच्छति। ततो दिवसो न प्राप्त एकोऽपि। एवं गतं षष्ट्या संगुण्य चन्द्रभुक्त्यानया। ७३६ विभज्यावाप्तदिवसादिकालः ०।२१।८। एवम गम्यादपि षष्ट्या संगुण्य चन्द्र-भुक्त्यानया ७३६ विभज्यावाप्तघटिकादिकालः ४४।१। अथ गतात् छेदः २१।८ क्रियते तद् यथा। अत्र दिने रात्रर्द्धमिदम् १३।५२ एतत् गतकालादस्मात् २१।८ ऊनमिवार्द्धरात्रप्रमाणं संशोध्य शेषं ७।१७। एतद्दिन-प्रमाणं तस्मात् संशोध्य शेषम्। एतावत्कालः। तत्र दिने लब्धाङ्क-समनक्षत्रम्। अथ गम्यात् ४४।१ रात्रर्द्धमिदं १३।५२ संशोध्य शेषम् ३०।८। एतावान् कालो द्वितीयदिने लब्धाङ्कसमनक्षत्रादनन्तरनक्षत्रमिति। एवं नक्षत्रप्रकरणम्। इदानीं तिथिच्छेदानयनार्थमार्य्यामाह—

अर्कोनचन्द्रलिप्ताः खयमस्वरभाजिताः फलं तिथयः।
गतगम्ये षष्टिगुणे भुक्त्यन्तरविभाजिते घटिकाः ॥२५॥

वाक्यार्थः। अर्केनोनोऽर्कोनः अर्कोनश्चासौ चन्द्रश्च अर्कोनचन्द्रः। तस्य लिप्ताः अर्कोनचन्द्रलिप्तास्ता विभाजिताः, भक्ताः। कैरित्याह। खयमस्वरैरिति। खं च यमौ च स्वराश्च खयमस्वरास्तैः फलं च तास्तिथयश्च। खयमस्वरभागहृतास्तिथयो लभ्यन्ते इत्यर्थः। गतं च गम्यं च गतगम्ये ते द्वेऽपि षष्ट्या गुणिते भुक्त्यन्तरभाजिते इति। भुक्तिश्च भुक्तिश्च भुक्तौ। तयोरन्तरं भुक्त्यन्तरं तेन विभाजिते। विभक्ते इत्यर्थः। गतगम्ये षष्टिगुणे चन्द्रार्कस्फुटभुक्त्यन्तरेण विभाजनीये इत्यर्थः। एवं यथा खं घटिकादिफलं भवतीत्यार्य्यार्थः।

करणम्। अर्द्धरात्रिक-स्फुटचन्द्रमसः अर्द्धरात्रस्फुटार्कं विशोध्य यद-वशिष्यते तल्लिप्तापिण्डीकार्य्यं ततस्तस्य लिप्तापिण्डं खयमस्वरैर्विभजेत्। सप्तभिः शतैर्विंशत्यधिकैरित्यर्थः। ७२०। अवाप्ताङ्कसमास्तिथयः सित-प्रतिपत्प्रभृतिभुक्ता लभ्यन्ते इत्यर्थः। शेषं गतसंज्ञं तदेव खयमस्वरेभ्यो विशोध्य गम्यसंज्ञं भवति। एवं गतगम्ये द्वेऽपि षष्ठ्या संगुण्य अर्कचन्द्रयोः स्फुटभुक्त्यन्तरेण विभजेत्। लब्धं घटिकादिफलं भवति। पृथक् पृथक् तत्र यः कालो गताद् गम्याद्वा लब्धः तावत्कालो लब्धाङ्कसमसंख्याया-स्तदनन्तरतिथिप्रवृत्तिर्ज्ञातव्या। गम्यो यः कालोऽप्यागतस्तावत्कालो लब्धाङ्क-समायास्तिथेरनन्तरा या तिथिस्तस्याः अनन्तरायास्तिथेः प्रवृत्तिर्भविष्यतीति एवं वेदितव्यम्। तेन पुनः छेदेन नक्षत्रवत्।

उदाहरणं यथा। स्फुटचन्द्रमाः ५।१४।१८।३६। अस्मात् स्फुटार्कोऽयं १।०।२०।४४ विशोध्य शेषम् ४।१३।५८।५२ एतल्लिप्तापिण्डीकृतं ८०३८।५२। अस्य खयमस्वरैर्भागे हृतेऽवाप्तम् ११। एतास्तिथयः भुक्ताः शेषं गतसंज्ञमिदम् ११८।५२। एतत् खयमस्वरेभ्योऽपास्य गम्यसंज्ञमिदम् ६०१।८। एवं षष्ठ्या संगुण्य रविचन्द्रयोः स्फुटभुक्तयोरनयोः ७३७|५७ / २७|४६

अन्तरेणानेन ६७८ / ४१ विभज्यावाप्तं घटिकादिफलं १०।३० एवं गम्यादपि षष्ठ्या संगुण्य भुक्त्यन्तरेण भागे हृते घटिकादिकालोऽयम् ५३।४ एतत् छेदेन नक्षत्रवत्। एवम् अर्द्धरात्रिकाच्चन्द्रान् नक्षत्रं कृतम्। तेनार्द्धरात्रात् कालः सर्व्वेणापरेणास्माभिरुदाहृतम्। एवम् अन्यस्मिन्नपि काले तावत्-कालिकात् ग्रहात् तत्कालादेव छेदोऽनेन प्रकारेण कालो वाच्यः। एवमादित्य-भौम-बुधजीवशुक्रशनैश्चराणामपि नक्षत्रानयनम्। राहो-रप्यस्तीति। तिथिरपि यत्र काले चन्द्रार्कौ स्फुटौ ततः कालात् सर्व्वेणापरेण दर्शितविधिना छेदः कार्य्य इति। अधुना स्थिरकरणानाम् परिज्ञानार्थम् आर्य्यामाह—

कृष्णचतुर्द्दश्यन्ते शकुनिः पर्व्वणि चतुष्पदम् प्रथमे।
तिथ्यर्द्धेऽन्त्ये नागं किंस्तुघ्नं प्रतिपदाद्यर्द्धे ॥२६॥

स्पष्टार्थेयम् आर्य्या तदपि व्याख्यायते। कृष्णचतुर्द्दश्यां तिथ्यर्द्धे द्वितीये

शकुनिर्नामकरणं भवति। तस्मादामर्देऽमावस्यायाम् चतुरंघ्रिनामकरणं भवति। द्वितीये अर्द्धे नागकरणम्। ततः प्रतिपत् प्रथमार्द्धे किंस्तुघ्नाख्यं करणं भवति। एवं चत्वारि करणानि स्थिराणि। अथ चलकरणानाम् आनयनार्थम् आर्य्यामाह—

**व्यर्केन्दुकलाभक्ताः खरसगुणैर्लब्धमूनमेकेन।**
**चलकरणानि ववादीन्यगहृतशेषं तिथिवदन्यत् ॥२७॥**

वाक्यार्थः। विगतोऽर्को यस्य स व्यर्कः। स चासाविन्दुश्च तस्य कला व्यर्केन्दुकलास्ताः भक्ताः कैरिति खरसगुणैः। खं च रसाश्च गुणाश्च तैर्लब्धं खरसगुणैर्लब्धम्। तदूनमेकेनेति। एकेन। रूपोनं कार्य्यमिति। एवं कृते चलकरणानि भवन्ति। कानि तानीत्याह ववादीनि। ववः आदिर्येषां तानि ववादीनि। वव-बालव-कौलव-तैतिल-गर-वणिग्विष्टय इति। अगहृतशेषमिति। अगैर्हृतम् अगहृतम् तस्य शेषम् ववादीन्येव तिथिवदन्यदिति। अन्यत् गम्यादिकं तिथितुल्यं भवति इत्यार्य्यार्थः।

करणम्। तत्र तावत् यानि स्थिरकरणानि पठितानि तानि मपठितकाले भवन्ति। कृष्णचतुर्द्दश्यादिषु मासेन सह भवति इत्यर्थः। यानि पुनश्चलकरणानि तान्येव तत्कालमुद्दिष्टं त्यक्तान्येषु कालेषु पुनः सम्भवन्तीति मासेनैकमेकम् वाराष्टकं भवन्ति इत्यर्थः। तत्रानेन गणितेन तिथ्यर्द्धभोगिनां करणानां परिज्ञानम्। व्यर्केन्दुकला इत्यादि तेनायम् अर्थो भवति। स्फुटचन्द्रात् स्फुटार्कं विशोध्य लिप्तापिण्डं कृत्वा तत् खरसगुणैर्विभजेत्। त्रिभिः शतैः षष्ट्यधिकैर्यल्लब्धम् तद्रूपहीनं कृत्वा सप्तभिर्विभजेत्। तत्रायं क्रमः ववबालव-कौलव-तैतिल-गरवणिग्-विष्टयश्चेति। ततः शेषं गतं तदेव खरसगुणेभ्योऽपास्य शेषं गम्यमाभ्यां चन्द्रार्कभुक्त्योरन्तरेण काले एव तिथिवत्। इति वचनात् छेदः। पूर्व्ववत्। तिथिवद् अत्र छेद इत्यर्थः।

उदाहरणम्। व्यर्केन्दूलिप्ता | ८०३८ / ५० | अस्य खरसगुणैर्भागेऽवाप्तं २२, एतल्लब्धं रूपहीनम् २१। अस्य सप्तभिर्भागे शेषम् ०। ववादीनि सप्तमं करणं

विष्टिरतो भुक्तम्। विष्टिकरणं शेषं गतसंज्ञं चेदम् |११८ / ५०|। एतत् खरस-गुणेभ्योऽपास्य गम्यसंज्ञमिदम्। |२४१ / १०| आभ्यां छेदस्तिथिवदस्त्येव। तिथ्यध्यायमुपसंजिहीर्षुर्व्यतीपातवैधृतयोः क्रान्तिसाम्यानयनं व्याख्यायते। तौ च ग्रन्थगौरवभयात् व्यतीपातवैधृतार्थमार्य्या-समुच्चयार्थं सूत्रमाह।

रविचन्द्रयुतौ व्यतिपातवैधृतौ भार्द्धचक्रयोर्दिवसाः
गतियुतिहृतमूनाधिकमपक्रमांशैः समैः पातः ॥२८॥

वाक्यार्थः। रविश्च चन्द्रश्च रविचन्द्रौ तयोर्युतिः तस्यां युतौ व्यतीपात-वैधृतौ व्यतीपातश्च वैधृतश्च व्यतीपातवैधृतौ। कथं च। तौ यथासंख्यं भवति। भार्द्धचक्रयोरिति। भार्द्धं चक्रं च तयोः भार्द्धसमीपे व्यतीपातः। चक्रसमीपे वैधृतिः। अयमभिप्रायः। गतियुतिहृतमिति गतिश्च गतिश्च गती। तयोर्युतिः। गतियुतिः तया युत्या हृतम्। गतियुतिहृतम्। किं तदित्याह। ऊनाधिकमिति। ऊनश्चापि अधिकं च ऊनाधिकम्। किं तद् भवतीत्याह। दिवसा इति। दिवसादिकालो भवतीत्यर्थः। अपक्रमांशैः समैः पातः इति। ऊनाधिकं भुक्तियोगेन विभज्य भूयोभूयस्तावत् कार्य्यौ यावदपक्रमांशा समा भवतीत्यभिप्रायः। आचार्य्यस्य तैः समगतैः पातकालो भवतीत्यार्य्यार्थः।

करणम्। इष्टदिने चन्द्रार्कावर्द्धरात्रिकौ स्पष्टौ कार्य्यौ तत्र तयोर्योगः कार्य्यः। तत्र योगे कृते यदा राशिषट्कं भवति। तदा तत् सन्निकृष्टो व्यतीपातो ज्ञातव्यः। यदा तु राशिद्वादशकं भवति तदा तत्समीपे वैधृतेन पतितव्यमिति। तस्मात् व्यतीपात-ध्रुवकं राशिषट्कम्। वैधृतध्रुवकं राशिद्वादशकं भवति। तत् कर्म्म विधीयते। चन्द्रार्कयोर्योगे ध्रुवकादप्यधिके अतीत। ध्रुवकेऽधिके चन्द्रार्कयो-र्योगे ध्रवकालः। तत्र ध्रुवकाले चन्द्रार्कपाता स्तात्कालिकाः कार्य्याः। तत् करणं अर्कचन्द्रयुतेः ध्रुवकस्य चान्तरं कार्य्यं तल्लिप्तापिण्डीकृतम्। पृथग् रविभुक्त्या संगुणयेत्। ततश्चन्द्रार्कभुक्तियोगेन विभजेत्। अवाप्तं लिप्ताद्यर्कफलं भवति। ततो लिप्तापिण्डं भूयोऽपि पृथग्गतं पातभुक्त्या संगुण्य चन्द्रार्कभुक्तियोगेन विभज्यावाप्तं लिप्तादिराहुफलं भवति।

पृथग्गतात् लिप्तापिण्डात् अर्कफलं विशोध्य चन्द्रफलं भवति। एवं वीथि अपि स्वफलानि भवन्ति। धनमृणं कदेत्युच्यते। युतेरपि अधिके ध्रुवके देयम्। स्वफलं चन्द्रार्कयोः पाते शोध्यम्। ध्रुवादप्यधिकायां युतौ शोध्यं स्वफलमर्कचन्द्रयोः पाते देयम्। एवं ध्रुवककालिका भवन्ति। अथ कस्मिन् काले ध्रुवककालिका इति ज्ञातुमिच्छति ततः लिप्तापिण्डं पृथक्स्थं चन्द्रार्कयोः स्फुटभुक्त्या विभज्यावाप्तो दिवसादिकालः। एष्यातीतेति परिज्ञानं पूर्व्वमेव व्याख्यातमिति। अथ क्रान्तिसाम्यानयनं व्याख्यायते। तथैतान्युपकरणानि युज्यन्ते। अर्कक्रान्तिः चक्रात् स्वक्रान्तिः ज्याकरण-विक्षेपानयन-चापकरणानि। तत्र तावत् क्रान्तिकरणमाचार्य्यस्त्रि-प्रश्नाध्याये वक्ष्यति। मया चोपयोगित्वाद् इहैवाभिधीयते। तत् क्रान्तिकरणार्थ-मार्य्यामाह—

क्रान्तिकला द्विरसगुणास्त्रिखमुनयो द्विखदिशो वसुत्र्यर्काः।
वसुवसुविश्वेखकृतमनवः स्वविक्षेपयुतवियुताः ॥२९॥

वाक्यार्थः। क्रमणं क्रान्तिस्तस्याः कलाः क्रान्तिकलाः कास्ता इति द्विरसगुणाः। एतदुक्तं भवति। स्फुटार्कं केन्द्रं परिकल्प्य तस्माज्-ज्याकेन्द्रं कार्य्यम्। ततोऽर्कवत् फलमानेयम्। इयान् विशेषोऽत्र प्रथमे राश्यर्धे द्विरसगुणाः त्रीणि शतानि द्विषष्ट्याधिकानीत्यर्थः। द्वितीये त्रिखमुनयः सप्त शतानि त्र्यधिकानीत्यर्थः। तृतीये द्विखदिशः सहस्रं द्व्यधिकमित्यर्थः। चतुर्थे वसुत्र्यर्का द्वादश शतानि अष्टत्रिंशदधिकानीत्यर्थः। पञ्चमे वसु-वसुविश्वे त्रयोदशशतान्यष्टाशीत्यधिकानीत्यर्थः। षष्ठे खकृतमनवः। चतुर्द्दशशतानि चत्वारिंशदधिकानीत्यर्थः। अङ्केनापि लिख्यन्ते।

| |
|---|
| ३६२ |
| ७०२ |
| १००२ |
| १२३८ |
| १३८८ |
| १४४० |

एतैः खण्डकैरर्कफलमानीय अर्कक्रान्तिर्भवति। अन्यस्मादपि स्फुटग्रहादनेनैव प्रकारेण तैरेव खण्डकैः क्रान्तिः कार्येति। एवं ज्ञाते क्रान्तिर्भवति। स्वविक्षेपयुतवियुता इति। स्वक्रान्तिवशाद् गोलपरिज्ञानम्। उदाहरणम्। प्रकटार्थत्वात् न दर्शितमिति। इष्टज्याकरणमाचार्य्यस्त्रिप्रश्नाध्याये वक्ष्यति मया चेह व्याख्यायते।

त्रिंशत्सनवरसेन्दुजिन(तिथि)विषयाराश्यर्द्धचापानां ।
अर्द्धज्याखण्डानि ज्याभुक्त्यैक्यं सभोग्यफलम् ॥३०॥

अत्र करणं यत्र कुत्रचित् ज्या क्रियते। तत्र ज्याकेन्द्रात् प्रथमे राश्यर्द्धे सनवत्रिंशत् एकोनचत्वारिंशद् इत्यर्थः। द्वितीये सरसाः त्रिंशत् षट्त्रिंशद् इत्यर्थः। तृतीये सेन्दुत्रिंशद् एकत्रिंशदित्यर्थः। चतुर्थे जिनाः चतुर्विंशतिरित्यर्थः। पञ्चमे तिथयः पञ्चदशेत्यर्थः। षष्ठे विषयाः पञ्चेत्यर्थः। राश्यर्द्धचापानामर्द्धज्याखण्डानीति। राशीनां चापानि अष्टादशशतप्रमाणानि तैर्नवशतप्रमाणे राशिचापार्द्धैरेकैकं ज्याखण्डं लभ्यते इति। ज्याभुक्त्यैक्यं सभोग्यफलमिति। भुक्तानामैक्यं भुक्त्यैक्यं किम्भूतमित्याह। सभोग्यफलमिति। एतदुक्तं भवति ज्याखण्डानीमानि।

| |
|---|
| ३८ |
| ३६ |
| ३१ |
| २४ |
| १५ |
| ५ |

ज्याकेन्द्रं लिप्तापिण्डीकृतं नवभिः शतैर्विभज्यावाप्तं यावत् भुक्तानि ज्याखण्डानि लभ्यन्ते तावन्त्येकीकृत्य ततो भोग्येन ज्याखण्डेन विकलं संगुण्य नवभिः शतैर्विभज्यावाप्तं भुक्त्यैक्यं कृत्वा सर्व्वदा सर्व्वत्र ज्येति भवति। अत्रोदाहरणं प्रकटार्थत्वान्न दर्शितमिति। विक्षेपानयनं चाचार्य्यश्चन्द्रग्रहणाध्याये वक्ष्यति। मया चोपयोगित्वादिहैवाभिधीयते। विक्षेपानयनार्थमार्य्यार्द्धमाह—

पातोनचन्द्रजीवा विक्षेपो नवगुणेषुहृता।

पातेनोनः पातोनश्चासौ चन्द्रश्च पातोनचन्द्रः। तज्जीवा पातोनचन्द्रजीवा स विक्षेपो भवति। किम्भूता इत्याह। नवगुणेषुहृतेति नवभिर्गुणा नवगुणा इषुभिर्हृता इषुहृता। पातोनचन्द्रजीवा नवगुणा सति इषुभिर्विभज्यावाप्तं चन्द्रविक्षेपो भवति। इति वाक्यार्थः।

करणम्। स्फुटचन्द्रात् पातं विशोध्य जीवा कार्य्या। त्रिंशत् सनवेति। पूर्व्ववदनन्तरोक्तविधिना ततस्तां नवभिः संगुण्य पञ्चभिर्विभजेत्। अवाप्तं लिप्तादिफलम्। चन्द्रविक्षेपो भवति। इत्युदाहरणं प्रकटार्थत्वान्न दर्शितमिति। चन्द्रार्कमानानयनं तत्रैव वक्ष्यति। मया इहैवाभिधीयते। तस्मात् मानानयनमाह—

भवदशगुणिते रविशशिगती नखैः स्वरजिनैर्हृते माने ॥३१॥

भवदष्टगुणिते इति। एते यथासंख्यं रविशशिभुक्ती द्वे अपि। हृते इति। कैरित्याह। नखैः खरजिनैरिति। अत्रापि यथासंख्यम्। एवं माने भवत इति वाक्यार्थः।

करणम्। अर्कस्फुटभुक्तिमेकादशभिः संगुण्य विंशत्या विभज्यावाप्तं लिप्तादिफलं मानं भवति। चन्द्रस्फुटभुक्तिं दशभिः संगुण्य खरजिनैर्विभजेत्। शतद्वयेन सप्तचत्वारिंशदधिकेनेत्यर्थः। २४७। एतैर्विभज्यावाप्तं लिप्तादिफलं मानं भवति चन्द्रमसः। उदाहरणं प्रकटार्थत्वान्न दर्शितमिति। चापानयनं चाचार्य्यस्त्रिप्रश्नाध्याये वक्ष्यति। मया चोपयोगित्वादिहाभिधीयते।

चापकरणार्थमार्य्यामाह—

**ज्याखण्डोने शेषे गुणिते नवभिः शतैरशुद्धहृते।**
**क्षेप्यानि शुद्धखण्डैर्गुणितानि शतानि नव चापम् ॥३२॥**

ज्याखण्डेनोनः ज्याखण्डोनः तस्मिन् ज्याखण्डोने शेषे। किंभूत इत्याह। गुणिते नवभिः शतैरशुद्धहृते इति। नवभिः शतैर्गुणितः नवशतगुणितः। तत्राशुद्धेन ज्याखण्डेन हृते। तस्मिन् क्षेप्याणि कानीत्याह। शतानि नव किम्भूतानि इति। शुद्धखण्डैर्गुणितानि। एवं कृते चापं भवतीत्यार्य्यार्थः।

करणम्। यावत्तीनां लिप्तानां कर्त्ता चापं कर्त्तुमिच्छति तावत्तीभ्यो लिप्ताभ्यो यावन्ति त्रिंशत्सनवादीनि खण्डकानि शुद्ध्यन्ति तावन्ति संशोध्य शेषं नवभिः शतैर्गुणयेत्। ततश्चाशुद्धज्याखण्डेन भागमपहृत्यावाप्तं लिप्तादिकं फलं भवति। तत् शुद्धज्याखण्डकसंख्याकगुणितेषु नवशतेषु क्षिपेत्। एवं कृते चापं भवति। अत्रोदाहरणम्। तद् यथा। अत्र त्र्यशीतिलिप्तानां चापं क्रियते। आभ्यो ज्याखण्डशुद्धशेषं ८ एतन्नवशतगुणितं जातं ७२०० असावशुद्धखण्डकेनानेन ३१ विभज्यावाप्तं लिप्तादिफलं २३२।१५ एतत् शुद्धाङ्कद्वयेन। अपि तु खण्डकसंख्ययाङ्कैः २ द्वाभ्यामित्यर्थः। गुणेषु नवशतेषु १८०० संयोज्य जातं २०३२।१५ एवं सर्व्वत्रोदाहरणीयमिति।

अथ करणानि कृत्वा। इदानीं क्रान्तिसाम्यानयनं व्याख्यायते। तत्र तावद् ध्रुवककालिकाद् रवेः क्रान्तिः कार्य्या चन्द्रस्य ततः क्रान्तिः कार्य्या विक्षेपश्च। तयोश्च क्रान्तिविक्षेपयोरेकदिग्योगः। भिन्नदिग्वियोगः। एवं कृते चन्द्रस्य क्रान्तिर्भवति। द्वे अपि क्रान्ती यदा तुल्ये तदा स व्यतीपातकालः। अथ तदा सम्भवति यदा ध्रुवककालिकस्य चन्द्रमसो विक्षेपाभावो भवति। अन्यथा नेति। अथ क्रान्ती तुल्ये न भवतः। तदा चन्द्रविक्षेपः रविक्रान्तौ वा धनमृणं वा कार्य्यम्। कदेति। चन्द्रक्रान्तिविक्षेपयोर्दिग्भेदे धनं कार्य्यं दिक्साम्ये ऋणम्। रविक्रान्तिं कृत्वा ततस्तस्याः क्रान्त्याः चापं कार्य्यं यत्र तत्र चापं क्रियते तत्र तत्र त्रिंशत् सनवेति जीवाभिः। इहाष्ट (?) पुनरयं विशेषः। क्रान्तिखण्डैश्चापं क्रियते तत्र प्रथमे खण्डे द्विषष्ट्याधिकं शतत्रयम्। द्वितीये खण्डके एकचत्वारिंशदधिकं शतत्रयम्। तृतीये एकोनं शतत्रयम्। चतुर्थे षट्त्रिंशदधिकं शतद्वयम्। पञ्चमे सार्द्धशतम्। षष्ठे द्वि-पञ्चाशत्। अङ्केनापि न्यासः।

| |
|---|
| ३६२ |
| ३४१ |
| २९९ |
| २३६ |
| १५० |
| ५२ |

एतैः खण्डकैः त्रिंशत् सनवाद्यैः स्वे पूर्व्वोक्तविधिना चापं कार्य्यं तस्य षष्ट्याभागमपहृत्य भागा भवन्ति। भागानां त्रिंशता भागे हृते राशयः एवं राश्यादिफलं स्याद्यं ततो यदि ध्रुवककालिकश्चन्द्रः प्रथमपदे भवति। तदा स एव पातकालिकचन्द्रमा भवति। ध्रुवककालिकश्चन्द्रमा यदि द्वितीयपदे भवति तदा राश्यादिफलं षड्चक्रादपास्य ततः पातकालिकश्चन्द्रः स्यात्। अथ तृतीये पदे तदा तद्राश्यादिफलस्य राशिषट्कं संयोज्य चन्द्रः पातकालिकः स्यात्। अथ चतुर्थे पदे भवति तदा तद् राश्यादिकं फलं चक्रादपास्य तात्कालिकश्चन्द्रमा भवति। एवं पातचन्द्रं कृत्वा। ततोऽर्द्धरात्रिकचन्द्रपातचन्द्रयोरन्तरं लिप्तापिण्डं कृत्वा। स्फुटभुक्त्या विभज्याप्तं दिवसादिकालः। तावत्कालोऽतीतस्यैष्यस्य वा ज्ञातव्यः। कदेति। अर्द्धरात्रिकचन्द्रात्। पातः यदाधिको भवति तदा एष्यः पातः। यथार्द्धरात्रिकचन्द्रात् पातचन्द्र ऊनो भवति। तदातीत इति। एवं कालं परिज्ञाय ततस्तेन कालेन दिवसादिना अर्कपातभुक्ती संगुण्य षष्ट्या विभज्याप्ते द्वे अपि फले भागाद्ये पृथक् पृथक् स्याप्ये। ततो यद्यतीतस्तदा स्वफलमर्कं ऋणं कार्य्यम्। अथैष्यः पातकालस्तदा स्वफलमर्कं धनं कार्य्यम्।

राहोरन्यथेति। एवं कृते पातकालिकौ अर्कपातौ भवतः। चन्द्रश्च स एव यावत् चन्द्रः स एव पातकालिक इति। एवं रविचन्द्रपातांस्तात्कालिकी-कृत्य पुनरर्कक्रान्तिः कार्य्या। चन्द्रस्य विक्षेपयुतवियुता स्वक्रान्तिः ततो निरूपयेत् यदि क्रान्त्योः साम्यं भवति। तदा स एव पातकालः। न चेत् तदा चन्द्रविक्षेपो रविक्रान्तिः (?)। चन्द्रतत्क्रान्तिविक्षेपयो दिग्भेदे योजयेत्। दिक्साम्ये शोधयेत्। तस्य क्रान्तिखण्डकैः त्रिरसगुणाद्यैः पूर्व्ववच्चापं कृत्वा ततः पूर्व्वोक्तेन विधिना पातचन्द्रं कृत्वा ततः कालं दर्शित-विधिना भूयोऽप्यर्कपातौ तात्कालिकौ कृत्वा एतदेव कर्म्म कार्य्यम्। एवं तावत् कार्य्यं यावच्चन्द्रपातः स्थिरो भवति। यत्र काले पातचन्द्रः स्थिरीभूत-स्तत्र काले रविराहू तात्कालिकौ कार्य्यौ। चन्द्रपाते चन्द्रः स्थिर एव। तत्र कालेऽर्कक्रान्तिः कार्य्या। चन्द्राच्च स्वक्रान्तिस्तस्मिन् काले तयोः क्रान्त्योः साम्यं भवतीति निश्चयेत्। ततस्तस्य पातचन्द्रस्यार्द्धरात्रिक-चन्द्रस्य चान्तरात् पूर्व्ववत् कालः आनेतव्यः। अर्द्धरात्रात् पूर्व्वेण वा परेण वा। अथैतस्मिन्नपि कर्म्मणि क्रियमाणे पातचन्द्रस्थिरो न भवति। तदा क्रान्त्योः साम्याभावः। एतच्च यदा सम्भवति। तदुच्यते। मिथुनान्ते यदा चन्द्रो भवति। ध्रुवकालिकस्तस्य विक्षेपयुता स्वक्रान्तिः सा यदा तात्कालिक-रविक्रान्तेश्चोना भवति तदा क्रान्तिसाम्याभावः। अथ धन्विन्यन्ते ध्रुवककालिकचन्द्रमा भवति। अतस्तस्य रविक्रान्तेः ऊना स्वक्रान्तिर्भवति तत्काले तदापि क्रान्ति साम्याभावः। तदभावे पातस्याप्य-भावः। अत्रावसरे यदि सपरिश्रमकर्म्म क्रियते तदा साम्यं नोत्पद्यते इति। प्रतिजानीमहे वयम्। अथ मिथुनान्तस्थस्य धन्विन्यन्तस्थस्य चन्द्रमसो रविक्रान्तिश्च अधिका स्वक्रान्तिर्भवति। तदा वारद्वयं क्रान्तिसाम्यं भवति। तदा पाताभाव एव। यत उक्तं ब्राह्मे चतुर्दशेऽध्याये—

> चक्रार्द्धेऽर्कशशियुतौ भिन्नायनयोरपमसमत्वे च।
> रविशशिनोः सममधु-छूतयोर्मान्द्विपदो व्यतीपातः ॥२३॥
> चक्रे वैधृतमेकायनस्थयोः क्रान्तिजीवयोः साम्ये।
> इन्धनरविमणियोगाद्वह्निवद्दूनाधिककलाभ्यः ॥२४॥

इति। अथ दृष्टकाले स्थित्यर्द्धकारणं व्याख्यायते। तत्रोक्ते रवि-

चन्द्रमाने कार्य्ये। तयोर्योगः कार्य्यः। तस्य योगस्यार्द्धं षष्ट्या संगुण्य अर्कचन्द्रयोः स्फुटभुक्त्यन्तरेण विभज्याप्तं स्थित्यर्द्धं भवति। तं पातकालात् संशोध्य प्रग्रहकालो भवति। द्वितीये स्थाने पातकालियोज्य-मोक्षकालो भवति। चन्द्रग्रहणवत्। तत्र प्रग्रहणमोक्षयोरन्तरे यो घटिकादिकालः स दुष्टाख्यः। सर्व्वक्रियास्वशुभो वर्जनीयः। ननु सर्व्वरात्रिदिवसो वा।

तथा चार्य्य-वराहमिहरः—

> विषप्रदिग्धेन हतस्य पत्रिणा
> मृगस्य मांसं शुभदं क्षताद्दृते।
> यथा तथैव व्यतिपात-दूषितः
> क्षणोऽत्र दुष्टो न तिथिर्न वासरः।

अथोदाहरणम्। तद् यथा। शाकः ७८६ मासः १ तिथयः १० तस्मिन् दिने स्फुटावर्द्धरात्रिकौ रविचन्द्राविमौ ०।२८।१२।५०॥ ५।२।२।३४। अनयो-र्योगः ६।१।१५।२४ एतदर्धचक्रादधिकम्। अतोऽर्द्धचक्रं विशोध्य ०।१।१५।२४ एतत् पृथक् कलीकृतमर्कभुक्त्यानया ५७.४६ गुणितं जातं ४०५५।३६ अस्यार्क-चन्द्रयोर्भुक्तियोगेनानेन ७८४।२८ भागे हृते अवाप्तं रविफलं ०।०।५।२८। एतत् पृथक्स्थादस्मात् ७५।२४ संशोध्य जातं चन्द्रफलम् ६८।५६। पुनरपि पृथक्स्थौ द्वौ संगुण्यार्कचन्द्रयोः स्फुटभुक्तियोगेन विभज्यावाप्तं लिप्तादि राहुफलं ०।१८। एवं त्रीणि फलानि ध्रुवकादधिकानि यस्मात् युतिरर्क-चन्द्राभ्यां स्वस्वफलं विशोध्य पातस्य दत्त्वा ध्रुवकालिका अर्कचन्द्रपाता जाताः।

| रवि | चन्द्र | पात |
|---|---|---|
| ०. | ५ | ४ |
| २८ | ० | ५ |
| ७ | ५२ | २४ |
| २२ | ३८ | २१ |

अथ कस्मिन् काले ध्रुवकालिका जाताः तदर्थं पृथक्कृतस्यास्य लिप्तापिण्डस्य ७५।२४ भुक्तियोगेनानेन ७८४।२८ भागमपहृत्यावाप्तं दिवसादिकालः अर्द्धरात्रात् पूर्व्वेण युतेरधिकत्वात् ध्रुवकादयं ५।४१। अथ ध्रुवकालिका

चन्द्रक्रान्तिरियं ६।८।३।३ चन्द्रस्य क्रान्तिविक्षेपयुतवियुतोऽयं ७८।७।४७। अत्र काले द्वे अपि समाने जाते। ततोऽयं पातकालो न भवति। अथ कर्म्मान्तरमुदाह्रियते।

तद् यथा। रविक्रान्तेरस्याः ६।८।३।३ चन्द्रविक्षेपमिदं ११।४।४१ संशोध्य चन्द्रक्रान्तिः। तद्विक्षेपयोः एकदिकत्वात् जातं ५६।८।२२ अस्याः क्रान्तिखण्डेन जातं चापं यथा १४४।४।३८ अस्य षष्ठ्यादिभिश्छेदेन राश्याद्यः एतच्चक्रार्द्धात् संशोध्य ध्रुवकचन्द्रस्य द्वितीयपदत्वात् जातः पातचन्द्रः ५।५।५५।२१। अथार्द्धरात्रिकचन्द्रस्य चान्तरमिदम् ०।३।५३।४७। एतल्लिप्तापिण्डीकृतं जातं २३३।४७ एतच्चन्द्रस्फुटभुक्त्यानया ७३६ विभज्यावाप्तदिनादिकालोऽयं ०।१८।५७।०। अथैतावान् कालोऽर्द्धरात्रात् पूर्व्वेण किमपि परेणैतद् जिज्ञासते तदर्थं पातचन्द्रोऽयं ५।५।५५।२१। आर्द्धरात्रिकचन्द्रादस्मात् ५।२।२।३४ अधिको जातः। अतः पातकालो भावी। अनेन कालेनेति ०।१८।५७। अथैतेन दिनादिना अर्कपातभुक्ती इमे ५७४६॥ ३।११ गुणिते जाते १०८४।६६० षष्ठ्या भागे हृते द्वे अपि फले भागाद्ये ०।१८।१४॥ ०।१।१० एते फले रविपातयोरर्द्धरात्रयोः पातस्य भावित्वात् अर्के दत्त्वा पाते विशोध्य जाता पातकालिका अर्कचन्द्रराहवः—

| अर्क | चन्द्र | राहु |
|---|---|---|
| ० | ५ | ४ |
| २८ | ५ | ५ |
| ३१ | ५५ | २३ |
| ४ | २१ | २ |

एवं तात्कालिकाद् रवेः क्रान्तिरियं ११।३२।२। चन्द्रमसः क्रान्तिरियं ८।२८।२१। अत्राप्येते क्रान्ती न तुल्यतः। चन्द्रक्रान्तिविक्षेपयोरेकभावाद्विक्षेपमिमं १३६।२३ रविक्रान्तेरस्याः ६८३।२ विशोध्य जातं ५५५।३८। अस्याद्यं क्रान्तिखण्डैरिदं १४०८।३० तस्य षष्ठ्यादिभिश्छेदैर्भागाद्यं च ०।२३।२८।३०। एतदेवार्द्धचक्रादपास्य पातचन्द्रोऽयं ५।६।३०।३० पुनरप्यर्द्धरात्रिकचन्द्रेणानेन ५।२।२।३४ तदन्तरं जातं ०।४।२७।५६ पूर्व्वोक्तेन विधिना पुनरप्यर्कपातौ। तात्कालिकौ भूतौ पातचन्द्रः स्थिरः। एवं चेति क्रमेणाऽर्कादयस्तात्कालिकाः यथा लिख्यन्ते। एवं पुन-

स्तात्कालिकाद् रवेः क्रान्तिरियं १८४। चन्द्रमसश्च क्रान्तिरियं १८४।१ एवं द्वे अपि क्रान्ती जाते। अर्द्धरात्रात् परेणास्मिन् कालेऽर्द्धरात्रात् परेण कालः। अस्मादर्द्धरात्रप्रमाणमिदं संशोध्य शेषं ८।१ एतावत्कालेन गतेन द्वितीयदिने व्यतीपातः। अथार्कचन्द्रयोर्माने ३१।४५॥ २८।४८। अनयोर्योगः ६१।३४ अस्यार्द्धं ३०।४७ एतत् षष्ट्या संगुण्य चन्द्रार्कयोः स्फुट-भुक्त्यन्तरेणानेन ६७८।६ विभज्यावाप्तं स्थित्यर्द्धमिदं २।४३। अथ पातकालः त्रिस्थानगतः

| | | |
|---|---|---|
| ८ | ८ | ८ |
| १ | १ | १ |

आद्यन्तयोरन्ते धनं कृत्वा जातः प्रग्रहण-मध्यममोक्षकालः

| | | |
|---|---|---|
| ५ | ८ | १० |
| २७ | १ | ४४ |

एवमुत्तरायां पातः। एवं यथासम्भवं गणकैरुदाहरणीयमिति। तथैवास्मिन्नेव व्यतीपातकर्मणि पञ्चविंशतिः श्लोकाः कथिताः ते चेह मया।

भार्द्धादूनाधिका लिप्ताश्चक्रादूनाधिकास्तथा।
रविचन्द्रयुतौ जाता हन्यात्तास्तु पृथग् गताः॥१॥
रविभुक्त्या ततो भक्ता गतियुक्तार्कचन्द्रयोः।
लब्धमर्कफलं ज्ञेयं पृथकस्थस्तेन हीनकः॥२॥
इन्दोः फलं तदेवं च राहुभुक्त्यार्कवत् फलम्।
ऊने ध्रुवे युतं शोध्य मिनेन्द्वोः स्वफलं तु यत्॥३॥
अधिके योजयेदेवं पाते कर्त्तव्यमन्यथा।
एवं च ध्रुवकालोने जायन्ते भार्द्धचक्रयोः॥४॥
तात्कालिका रवेः क्रान्तिः स्वक्रान्तिश्चैव शीतगोः।
कृत्वेयं च दिने तुल्ये पातकालः स संज्ञितः॥५॥
अथ चेदधिकोने ते तदा कर्म्म विधीयते।
चन्द्रविक्षेपतः क्रान्त्योर्दिग्भेदे चाप्युपक्रमः॥६॥
योजयेच्चन्द्रविक्षेपं दिक्साम्ये शोधयेत् ततः।
तस्याचापं भवेद् यत्र क्रान्तिखण्डैः स चन्द्रमाः॥७॥
ततः षष्ट्यादिभिश्छेदे राश्याद्यपातकालिकः।
चन्द्रश्चेत् प्रथमे पादे चक्रस्य ध्रुवकालिकाः॥८॥
भार्द्धाच्छोध्ये द्वितीये तु तृतीये भार्द्धसंयुतः।
चक्रादूनश्चतुर्थे तु पातकाले तु स स्फुटः॥९॥

अर्द्धरात्रिकचन्द्रस्य पातचन्द्रस्य चान्तरात्।
लिप्तापिण्डीकृतं भक्तं स्फुटभुक्त्या तु शीतगोः ॥१०॥
पातचन्द्रेऽधिके भावि हीने भूतोऽर्द्धरात्रिकात्।
ततोऽर्कपातभुक्ती द्वे हन्यात् कालेन ते पृथक् ॥११॥
अशास्तो दिवसादिर्यो निर्विशेषः क्रमः स्फुटः।
कालो भवति पातस्य निर्विशेषः स उच्यते ॥१२॥
फले तुल्ये धृते द्वे तु भागाद्ये रविपातयोः।
चयं भूते विशोध्ये च पातार्कौ चार्द्धरात्रिके ॥१३॥
राहो ऋणं धनं व्यस्तं पातकाले तु तौ स्थितौ।
एवं तात्कालिकार्केन्द्वोः पुनः क्रान्ती स्वके पृथक् ॥१४॥
तत्राद्यदिनतुल्ये तु पातकालस्तदोच्यते।
नवे चन्द्रेऽत्र विक्षेपं पूर्व्वोक्तं रव्यपक्रमे ॥१५॥
कर्म्म कुर्य्यात् पुनश्चन्द्रः पुनः कालस्ततो भवेत्।
एवं तावत् पुनः कुर्य्यात् यावच्चन्द्रोऽविशेषतः ॥१६॥
पातचन्द्रः स्थिरो यत्र कालेऽर्कचन्द्रयोस्तथा।
क्रान्त्यंशैः समतां याति सर्व्वदैव न संशयः ॥१७॥
यदापक्रमयोः साम्यं नोत्पद्येतार्कचन्द्रयोः।
पात एवं तदा नास्ति यत्र चैतत् तदुच्यते ॥१८॥
धन्विन्यन्ते यदा क्रान्तिर्मिथुनान्ते च शीतगोः।
रव्यपक्रमतश्चोना तदा साम्यं न विद्यते ॥१९॥
अथ चेदधिका क्रान्तिस्तदा वारद्वयं भवेत्।
तत्रैकं गृह्यते साम्यमिदानीं च तदुच्यते ॥२०॥
भेदायने यदार्केन्द्वोर्व्यतीपातस्तदा भवेत्।
वैधृतं च तदापि स्याद् भिन्नगोलकयोः स्वयोः ॥२१॥
मध्यधृते यथा तुल्ये विषतां गच्छतस्तदा।
इनेन्द्वोः क्रान्तिभागाश्च समागच्छति दुष्टताम् ॥२२॥
षष्ठ्याघ्नान् मानयोगार्द्धाद् भुक्त्यन्तरविभाजितात्।
स्थित्यर्द्धं च भवेदेवं वैधृतान्तरतस्ततः ॥२३॥

चयं धनं ततः कुर्य्यात् प्राक् पश्चात् पातकालतः ।
स कालो दुष्टकालाख्यः सर्व्वकर्म्मविगर्हितः ॥२४॥
एवं पातपरिज्ञानं मयोक्तं तु यथागमम् ।
पञ्चविंशतिभिः श्लोकैः ॐ नमः परमात्मने ॥२५॥
पृथुस्वामिकृतं चेदं क्रान्तोरानयनं स्फुटं
शिष्याणामुपकाराय स्वयशोऽभिविवृद्धये ॥२६॥

एवं व्यतीपातप्रयोगोऽस्माकं पारम्पर्य्येणागतः। ब्रह्मोक्त-प्रयोगो नास्माभिर्व्याख्यातः। कर्म्मबहुत्वात् न कश्चिल्लिखितुमपि शक्त इति। ज्ञातं यावद् ब्राह्मं गणितं तस्माद् हितार्थं शिष्याणामनेन प्रयोगेणास्माभिर्व्याख्यातं चेति। अथ संक्रान्तिप्रकरणं व्याख्यायते।

ग्रहस्य तद् यथा। राशेर्यावद् ग्रहेणाभुक्तं भागादिकं तल्लिप्तापिण्डं कृत्वा स्फुटभुक्त्या विभजेत्। अवाप्तं दिवसादि कालो भवति। तत्कालेन ततो राशेर्ग्रहो यास्यत्यग्रतः। एवं ऋजुगतिग्रहे। वक्रिणि विपर्य्ययेण। एवं स्थूलं च पुनः पुनः कृत्वा निरन्तरमिच्छताऽसकृत् कर्म्मणा कालः साध्य इति। अथार्कसंक्रान्तिपरिज्ञानं व्याख्यायते। तत्रार्कमानार्द्धं षष्ट्या संगुण्य तस्यैव स्फुटभुक्त्या विभज्यावाप्तो घटिकादिकालः। करणागतात् संक्रान्तितः पुण्यकालः पूर्व्वेणापरेण वा स्नानादियोग इति। न केवलं रवे (?) र्यावदन्येषामपि ग्रहाणां स्वमानार्द्धं षष्ट्या सङ्गुण्य स्फुटभुक्त्या विभज्यावाप्त-घटिकादिकालः पुण्यसंक्रान्तिकालः। पूर्व्वापरेण तावत्-कालो राशिद्वयेऽपि ग्रहो भवेत्। छेदोऽस्य। अन्यत्रार्कचन्द्रभुक्त्यन्तरेणेति तिथिकरणयोः। छेदस्य तावत् कालो नक्षत्रद्वयस्य फलं भवतीति तिथिद्वयस्य चेति। तथा च ब्राह्मे मानार्द्धात् षष्टिगुणाद् भुक्तिहृतान्नाडिकादिलब्धेन राश्यन्तः ततः प्रागादिः पश्चादन्तोऽर्कसंक्रान्तिः पुण्यकालो यल्लब्धं नाडिकादि तद्द्विगुणम्। स्नान-जप-होम-दानादिकोऽत्र धर्म्मो विशिष्टफलः। . एवं नक्षत्रात् तिथिकरणान्तं शशिप्रमाणार्द्धात्। षष्टिगुणाद् रविशशिनोर्भुक्त्यन्तरेण लब्धघटिकाभिः संक्रान्तिच्छेदो यथावत् करोति मिश्रफलग्रहस्तावत्। यस्मात् तस्मात् इष्टे (?) राज्यं परिहरति लोक इति।

अथात्र खण्डखाद्यके वर्षाधिपमासाधिपानयनमाचार्य्येण नाभिहितम्।

ग्रन्थगौरवभयात् तदन्तरेण लोकव्यवहारो न शक्यते कर्त्तुम्। यतस्तमुद्दिश्य संहिताकारैः फलान्यभिहितानि। तथा चाचार्य्यो वराहमिहिरः—

सर्व्वत्र भूर्विरलशस्ययुता वनानि
दैवाद् विभञ्जयिषुदंष्ट्रि-समावृतानि।
स्यन्दति नैव च पयः प्रचुरं स्रवन्तो
रुग्भेषजानि न तथातिबलान्वितानि॥
तीक्ष्णं तपत्यदितिजः शिशिरेऽपि काले
नात्यम्बुदा जलमुचोऽचलसन्निकाशाः।
नष्टप्रभर्क्षगणः शीतकरं नभश्च
सीदन्ति तापसकुलानि सगोकुलानि॥
हस्त्यश्वपत्तिमदसत्त्वबलैरुपेता
बाणासनासिमुशलातिशयाश्चरन्ति।
घ्नन्तो नृपा युधि नृपानुचरैश्च देशान्
संवत्सरे दिनकरस्य दिनेऽथ मासे।*

इत्येवमादीनां परिज्ञानादिः दैवज्ञत्वं नित्यमतोऽहं ब्राह्मादाकृष्य प्रयुञ्जे। खण्डखाद्यकाहर्गणेन वर्षाधिपमासाधिपयोरानयनमाह। तद् यथा वर्षाधिपतिस्तावत् इष्टदिने खण्डखाद्यकाहर्गणे नन्देन्दुगुणसंयुतं कार्य्यम्। त्रिभिः शतैरेकोनविंशत्या अधिकैरित्यर्थः ३१९। एतैरधिकं कृत्वा षष्ट्यधिकैः त्रिभिः शतैर्विभजेत् ३६० लब्धफलं त्रिगुणं कृत्वा त्रिभिरधिकं कार्य्यम्। एवंविधस्य राशेः सप्तभिर्भागमपहृत्यावशेषाङ्कसमोऽर्कात् प्रभृति वर्षाधिपो भवति। षष्टिशतत्रयभक्ता (?) यदि शेषाच्छेषं तावद्भिर्दिनैः स वर्षाधिपतिर्भविष्यतीति। एवं प्रतिवर्षमन्यत्वान्यदिने वर्षाधिपतिर्भवति। ननु पुनः चैत्रसितादि नित्यम्। अत्रोदाहरणम्। तद् यथा। अहर्गणः ७२६७५ अत्र नन्देन्दुगुणानिमान् ३१९ संयोज्य जातं ७२९९४। अस्य षष्ट्याधिकैस्त्रिभिः शतैर्भागे हृतेऽवाप्तं २०२ एतत्त्रिगुणं ६०६ (पुनस्त्रियुतं ६०९) अस्य सप्तभिर्भागे हृते शेषम् ०। अतोऽत्र वर्षे शनैश्चराधिपतिस्तावत् कियन्ति दिनानीति। अत्र शेषमिदम् २७४। एतावन्ति दिनानि प्रवृत्तस्य शनैश्चरस्य एतत् षष्ट्यधिकशतत्रयेभ्योऽपास्य शेषं ८६ एतावन्तो दिवसा अस्य एष एवाधि-

* बृहत्संहितायां ग्रहवर्षफलाध्यायस्य १-३ श्लोकाः।

पतिः। अत्र शाके ७८६ एवमाषाढपूर्व्वमङ्गारक -ाधिपत्यं भविष्यतीति। एवं व्यभिचारेण वर्षाधिपतेः प्रवृत्तिः। ये पुनर्व्यावर्त्तन्ते चैत्रसितादेः संवत्सराधिपत्यादीनां प्रवृत्तिः। तेन ज्ञानं ज्ञातम्। अस्मद्व्याख्यातारस्ते यतः कल्पादारभ्य षष्ट्यधिकैस्त्रिभिः शतैर्दिनात् प्रतिवर्षं वर्षाधिपो भवति। सावनमानेन वर्षाधिपतिः मासाधिपतिर्दिनपतिश्चेति। अथ मासाधिपतिः इष्टदिने खण्डखाद्यकाहर्गणं नवरूपाधिकं कुर्य्यात्। एकोनविंशत्यधिकमित्यर्थः।१८। एतैरधिकं कृत्वा त्रिंशता विभजेत्।२०। अवाप्तं फलं द्विगुणीकृत्य द्वाभ्यां संयुक्तं कार्य्यम्। एवंविधस्य सप्तभिर्भागमपहृत्य शेषाङ्कसमोऽर्कात् प्रभृति मासाधिपतिर्भवति। ज्ञाते गणिते इत्यर्थः। त्रिंशता भागे हृते यच्छेषं तावन्ति दिनानि तस्य प्रवृत्तस्य गतानि। तदवशेषं त्रिंशतोऽपास्य यच्छेषं तावन्ति स एव मासाधिपतिर्ज्ञेयः। एवं कालव्यभिचारात् मासाधिपतेरपि प्रवृत्तिर्ननु पुनः सितपक्षादेरारभ्य नित्यमिति।

उदाहरणम्। ७२६७५। अस्मिन्नहर्गणे नवरूपाणीमानि १८ संयोज्य जातम् ७२६८४। अस्य त्रिंशता भागे हृते फलम् २४२२। एतद्द्विगुणीकृत्य द्व्यधिकं कृतं जातं ४८४८। अस्य सप्तभिर्भागे हृते शेषम् ४। अतोऽत्र बुधाधिपतिः। अथ त्रिंशतः शेषम् ४। एतावन्ति दिनानि प्रवृत्तस्य। एतत् त्रिंशतोऽपास्य शेषम् २६। एतावन्ति दिनानि बुधस्य पश्चात्। अत ऊर्द्ध्वं मासाधिपोऽन्यो भविष्यति। एवं द्वादशात्ममासाधिपस्यान्यस्य प्रवृत्तिः। एवं कल्पाव्यभिचारेण नित्यं मासाधिपसंप्रवृत्तिर्ज्ञातव्या इति। अतः कल्पादारभ्य त्रिंशद्दिनानि प्रत्येको मासाधिपो भवति। सावनमानेनेति। अत्रास्मिन्नेवार्थे संवत्सराधिपमासाधिपतयोरानयनार्थं प्रयोगः। श्लोकत्रितयं मया कृतं तदेदम्—

नन्देन्दुगुणसंयुक्तं द्युगणं भाजितं ततः।
शून्यषष्ट्यग्निभिर्लब्धं त्रिगुणं चाधिकं त्रिभिः॥१॥
सप्तभिः शुद्धशेषं तदर्काद्योऽब्दपः सदा।
ब्रह्मागते समत्वेन मया प्रोक्तं प्रयोगतः॥२॥
नवरूपाधिकाद् भक्ताद् द्युगणात्त्रिंशता फलम्।
द्विगुणं वारसंयुक्तं नगहृतं स मासपः॥३॥

तथा ब्राह्मे स्फुटसिद्धान्ते त्रयोदशाध्याये—

युगणात् त्रिंशद्भक्ताल्लब्धं द्विगुणितं सरूपं तत् ।
सप्तविभक्तं शेषः सावनमासाधिपोऽर्कादिः ॥४३॥
षष्टिशतत्रयभक्तात् कल्पगताहर्गणात् फलं त्रिगुणम् ।
सैकं सप्तविभक्तं सावनवर्षाधिपोऽर्कादिः ॥४४॥

अस्य ब्राह्मप्रयोगस्य प्रयोजने निरूप्यमाणे एक एवार्थो भवति । होराधिपतिपरिज्ञानमाचार्य्येण नाभिहितं व्यवहारे सर्व्वत्र विभागो तथा च यात्रायाम् । यद्यस्य फले दिवसे तदवशेषं कालहोरा... एवमादिफलानां परिज्ञानं स्यात् । होरापरिज्ञाने सति तस्मात् ... व्याख्यायते । यथेष्टदिनेऽभीष्टकाले लग्नं कार्य्यम् । तस्मात् तात्का... स्फुटार्कं संशोध्य शेषं भार्गपिण्डं कृत्वा पञ्चदशभिर्विभजेत् । लब्धं होरा भवन्ति । तथोत्तरा होरा न तत्र काले भवति । तदा रूपं योज्यं ततः सप्तभिर्विभज्य शेषाङ्क-समो दिनपतेः प्रवृत्तिर्होराधिपो भवति तथा ब्राह्मे—

अर्कोनलग्नहोरा पञ्चगुणा सविकला यदि सरूपा
सप्तविभक्ता शेषो दिनपाद्यः कालहोरेशः ॥ इति ।*

अन्येषां त्वार्य्यभटादीनां मतम् । यथा दिनगतघटिद्विगुणाः पञ्चभिर्भक्ता लब्धं भुक्ता होरा भवन्ति । तत्र दिनपस्य प्रथमा होरा द्वितीया दिनपात् षष्ठस्य । एवं षष्ठात् षष्ठात् क्रमेण ज्ञातव्यो होराधिपः । अत्र प्रयोगेषु यत् पूर्व्वं व्याख्यातं तच्छोभनं द्वितीयं गतघटिकादिभिः सर्व्वत्रायं क्रमः । वर्षाधिपतेश्चतुर्थो वर्षाधिपतिः द्वितीये वर्षे । मासपतेस्तृतीयो द्वितीये मासि भवति । होराधिपतेः षष्ठो द्वितीयहोरायाम् । एवं यदत्राध्यायेऽधिकमूनं व्याख्यातं तद्विद्भिः क्षमणीयम् । यदा... धारितम् । सर्व्वथैव व्याख्येयमिति ।

इति चतुर्व्वेद-पृथूदकस्वामिकृते खण्डखाद्यविवरणे
तिथिनक्षत्राधिकारः प्रथमः ॥

---

* ब्राह्मस्फुटसिद्धान्ते, १३श अ:, ४५ श्लोक: ।

## अथ ग्रहगत्यध्यायः

प्रणम्य शिरसा देवमनादिं नित्यमव्ययम् ।
प्रवक्ष्यामि ग्रहगतौ भाष्यं सम्यक् परिस्फुटम् ॥

अथातो ग्रहगत्यध्यायो व्याख्यायते । तत्रादावङ्गारकमध्यमानयनमाह ।

**पादोनरसनवोदधि ४९६-हीनाद् भगणाद्यहर्गणाद् भौमः ।**
**सप्ताष्टरसैः ६८७ सकलो**
**नवतत्त्वाब्धिस्वरशशाङ्कैः १७४२५९ ॥१॥**

वाक्यार्थः । पादोना रसाश्च नव च उदधयश्च पादोनरसनवोदधयः । तैर्हीनः पादोनरसनवोदधिहीनः तस्मात् । कुतः भणति । अहर्गणाद्दिनगणादित्यर्थः । भगणादिरिति । भगणः आदौ यस्य सः चक्रादिरित्यर्थः । को भौम इति । सप्ताष्टरसैरिति । सप्त च अष्टौ च रसाश्च तैर्भगणाप्तमित्यर्थः । सकलो नवतत्त्वाब्धिस्वरशशाङ्कैः अहर्गणात् कलाद्यासेन फलेन स एव भौमाधिकः कर्त्तव्य इत्यार्य्यार्थः ।

करणम् । इष्टदिनाहर्गणं स्थापयित्वा तस्मात् पादोनरसनावोदधयः शोधनीयाः दिनानाम् । चत्वारि शतानि पञ्चनवत्यधिकानि घटिकाश्च पञ्चचत्वारिंशत् शोधनीया इत्यर्थं ।४९५।४५ शेषस्य सप्ताष्टरसैर्भागो हार्य्यः षड्भिः शतैः सप्ताशीत्यधिकैरित्यर्थः ।६८७ । लब्धा भगणास्त्याज्या भगणशुद्धशेषाद् राश्यादिचन्द्रोक्तवद् भौमो भवति । ततो भूयोऽप्यहर्गणस्य नवतत्त्वाब्धिस्वर शशाङ्कैर्भागो कर्त्तव्यः । लक्षेकेन चतुःसप्ततिसहस्रैः शतद्वयेनैकोनषष्ट्यधिकेनेत्यर्थः १७४२५९ । अवाप्तं लिप्तादिफलम् । पूर्व्वागते भौमे प्रक्षिप्य ततस्तस्मिन् विलिप्ताद्वयं संयोजनीयम् । कुजोऽधिको द्वाभ्यामिति वचनात् । एवं कृते यल्लब्धं भवति स अर्द्धरात्रिको मध्यमो लङ्कायां भौमो भवति । अथ भौमभुक्त्यर्थमहर्गणः ।१। अस्यैव सप्ताष्टरसैर्भागे कृते भगणः ० । शेषादियं राश्यादिभौमभुक्तिः ०।०।३१।२६ पुनरप्यहर्गणस्यास्य नवतत्त्वाब्धिस्वरशशाङ्कैः भागे कृते विलिप्ता ।०। एवं भौमस्यैकत्रिंशल्लिप्ताः षड्विंशतिविलिप्ता मध्यमभुक्तिः इति ।

अथोदाहरणम्। तद् यथा। शाकेऽस्मिन् ७८६ मासाः ० तिथयः ० अस्मिन् दिने अहर्गणः ७२६७५ एतस्मात् पादोनरसनवोदधिहीनात् ४८५।४५ संशोध्य शेषं ७२१७८।१५ अस्य सप्ताष्टरसैरमीभिः ६८७ भागे हृते लब्धं भगणाः १०५। भगणशुद्धशेषं ४४।१५ अस्माद्द्वादशादिगुणकारैः चन्द्रोच्चवत् राश्यादिको भौमः ०।२३।११।१६। पुनरप्यहर्गणः ७२६७५ अस्मान्नवतत्त्वाब्धि-खरशशाङ्कैरमीभिः १७४२५९ भागे हृते कलादि फलं ०।२५। एतत् पूर्व्वागते भौमेऽस्मिन् ०।२३।११।१६ संयोज्य हे विकले च जातो लङ्कायां मध्यमोऽर्द्ध-रात्रिको भौमः ०।२३।११।४३। भौमभुक्तिः मध्यमा पूर्व्वमेवोदाहृतेति। एवं भौममध्यमानयनम्। अथ बुधशीघ्रानयनमाह।

बुधशीघ्रं शत १००-गुणितात्
अश्विधृतियमोनात्।
सप्तनवस्वरवसुभिः ८७९७
कृतखमनुनगैः ७१४०४ कलाभ्यधिकम् ॥२॥

शतगुणितादहर्गणादित्यर्थः। न केवलं शतगुणितात्। यावत् अश्वि-धृतियमोनात्। अश्वी च धृतयश्च यमश्च अश्विधृतियमाः। तैरूनः अश्विधृतियमोनः। शतगुणोऽहर्गणः अश्विधृतियमैरूनः कार्य्यः। तस्मात् शतगुणितात् अश्विधृतियमोनात्। सप्तनवस्वरवसुभिरिति। सप्त च नव च स्वराश्च वसवश्च सप्तनवस्वरवसवः तैः शतगुणादहर्गणात् अश्विधृतियमोनात् भगणादिबुधशीघ्रं लभ्यते इति। कृतखमनुनगैः कलाभ्यधिकमिति। कृताश्च खं च मनवश्च नगाश्च कृतखमनुनगाः तैस्तस्मादहर्गणात् कलाद्यासेन फलेन बुधशीघ्रमधिकं करणीयमित्यर्थः।

करणम्। इष्टदिनाहर्गणं संस्थाप्य शतगुणं कृत्वा तस्मात् अश्विधृति-यमान् संशोधयेत्। सहस्रद्वयं शतमेकाशीत्यधिकमित्यर्थः। २१८१। एतान् संशोध्य शेषस्य सप्तनवस्वरवसुभिर्भागे हृते भगणास्त्याज्याः। शेषात् भौमवत् राश्यादि बुधशीघ्रं भवति। पुनरप्यहर्गणस्य कृतखमनुनगैर्भागो हर्त्तव्यः। एकसप्ततिसहस्रैः चतुःशतैः चतुर्भिरधिकैरित्यर्थः ७१४०४ एतैर्भागे हृते कलादिफलं पूर्व्वागते बुधशीघ्रे संयोज्य ततस्तस्मात् द्वाविंशतिः

यमषोडशभिर्भागो हार्य्यः। लब्धैकेन द्वाषष्टिभिः सहस्रैः षड्भिः शतैः एकविंशत्यधिकैरित्यर्थः ।१६२६२१। अवाप्तेनांशादिफलेन स एव जीवः ऊनः कार्य्यः। तस्मिन् विलिप्ताचतस्रः संयोज्या चतसृभिरधिको जीव इति वचनात्। एवं कृते यद् भवति सोऽर्द्धरात्रिको मध्यमो लङ्कायां जीवो भवति। अथ जीवभुक्त्यर्थमहर्गणः ।१। अस्य रदविकृतैर्भागे हृते भगणाः ।०। शेषम् ।१। अस्मात् द्वादशादिगुणकारैर्ग्रहवत् राश्यादिका जीवभुक्तिः ०।०।४।५९। अथ भूयोऽप्यहर्गणस्यास्य ।१। शशियमरसयमषोडशभिर्भागे हृते विलिप्तापि न प्राप्ता। तस्माल्लिप्ताचतुष्टयमेकोनषष्टिविलिप्ता जीवभुक्तिः।

अत्रोदाहरणम्। यथेष्टाहर्गणः ७२६७५ अस्मात् पञ्चांशोनगुणेशहृद्य एतान् २११२।४८ संशोध्य शेषं ७०५६२।१२। अस्य रदविकृतैरमीभिः ४३३२ भागे हृते भगणशुद्धशेषम् १२५०।१२ अस्मात् भौमवर्त्मनैव च छेदेन राश्यादिको जीवः ३।१३।४८।१८ भूयोऽप्यहर्गणस्यास्य ७२६७५ शशियमरसयमषोडशभिरमीभिः १६२६२१ भागे हृते अंशादिफलं ०।२६।४८। एतत् पूर्व्वागतात् जीवाद् अस्मात् ३।१३।४८।१८ संशोध्य शेषं ३।१३।२१।३० एषोऽर्द्धरात्रिको लङ्कायामिति। जीवमध्यमभुक्तिः प्रथममेवोदाहृतेति। एवं जीवमध्यमानयनम्।

अथ शुक्रशीघ्रानयनमाह—

पादयुतागगुणोनाद् दशगुणितान्मण्डलादि सितशीघ्रम्।
मुनिजिनयमलैः सांशं व्यर्कनगात् विकृतखनगागैः ॥४॥

वाक्यार्थः। पादेन युताः पादयुताः ते अगाश्च पादयुतागाः। पादयुता अगाश्च गुणाश्च पादयुतागगुणाः तैरूनः पादयुतागगुणोनः तस्मात् दशगुणाद् इति। सितशीघ्रगामिनि मण्डलमादौ यस्य फलस्य तन्मण्डलादि चक्राद्यासमित्यर्थः। सितस्य शीघ्रं सितशीघ्रं मुनिजिनयमलैरिति। मुनयश्च जिनाश्च यमलौ च मुनिजिनयमलाः तैर्भगणादि सितशीघ्रं लभ्यते इत्यर्थः। सांशं व्यर्कनगात् विकृतखनगागैरिति। सहांशैर्वर्त्तते इति सांशं कुतो भणति। अर्कश्च नगाश्च अर्कनगाः ते विगता यस्मात् अहर्गणात् सोऽयं व्यर्कनगः।

तस्मात् व्यर्कनगात्। प्रयश्च कृताश्च खं च नगाश्च अगाश्च तैस्त्रिकृतखनगागैः व्यर्कनगादहर्गणादापेनांशादिना फलेन सितशीघ्रमधिकं कार्य्यमित्यर्थः।

करणम्। इष्टदिनाहर्गणं संस्थाप्य तस्मात् पादयुतागगुणाश्च शोधनीयाः। सप्तत्रिंशद् दिवसा पञ्चदशघटिकाश्चेत्यर्थः। एताः संशोध्य शेषं दशगुणं कृत्वा मुनिजिनयमलैर्विभजेत्। सहस्रद्वयेन द्विशताधिकेन सप्तचत्वारिंशद्भिरित्यर्थः। २२४७। अवाप्तभगणास्त्याज्याः। भगणशेषाङ्केनैव छेदेन भौमवद् राश्यादिकं सितशीघ्रं भवति। भूयोऽप्यहर्गणात् अर्कनगान् संशोधयेत्। सप्त शतानि द्वादशाधिकानीत्यर्थः। ७१२। एतत् संशोध्य शेषस्य त्रिकृतखनगागैर्भागो हर्त्तव्यः। सप्तसप्ततिभिः सहस्रैस्त्रिचत्वारिंशदधिकैरित्यर्थः ७७०४३ एतैर्भागे हृते अंशादिफलं भवति। तत्पूर्व्वागते सितशीघ्रे संयोज्य अर्द्धरात्रिकं लङ्कायां सितशीघ्रं भवति। भुक्त्यर्थमहर्गणः १। एतद् दशगुणम्।१०। अस्य मुनिजिनयमलैर्भागे हृते भगणाः।०। शेषाद् ग्रहवद् राश्यादिका सितशीघ्रभुक्तिः।०।१।३६।७ भूयोप्यहर्गणस्यास्य त्रिकृतखनगागैर्भागे हृते विलिप्तापि न प्राप्ता। अत एवैको भागः षड्विंशतिर्लिप्ताः सप्तविलिप्ताः मध्यमसितशीघ्रभुक्तिरिति।

अथोदाहरणम्। तद् यथा। अहर्गणः ७२६७५ अस्मात् पादयुताग गुणानेतान् ३७।१५ संशोध्य शेषं ७२६३७।४५ एतद् दशगुणं जातं ७२६३७०।४५०। घटिकाराशेरस्य ४५० षष्ट्या भागे हृते लब्धम् ७ शेषम् ३० एतत् पूर्व्वाङ्केऽस्मिन् ७२६३७० संयोज्य जातम् ७२६३७७।३० अस्य मुनिजिनयमलैरमीभिः २२४७ भागे हृते भगणशुद्धशेषं ५८६।३० अस्मात् पूर्व्ववद् राश्यादि सितशीघ्रं ३।५।२६।२ भूयोऽप्यहर्गणस्यास्य ७२६७५ अर्कनगान् संशोध्य ।७१२। शेषम् ७१८६३ अस्य त्रिकृतखनगागैरमीभिः ७७०४३ भागे हृते अंशादिफलम् ०।५६।२ एतत् पूर्व्वागते सितशीघ्रेऽस्मिन् संयोज्य जातम् ३।६।२२।४। मध्यमं लङ्कायामर्द्धरात्रिकं सितशीघ्रं भवति। सितशीघ्रभुक्तिः पूर्व्वोदाहृता। एवं सितशीघ्रानयनम्। अधुना शनिमध्यमानयनमाह—

**सार्द्धेन्दुनवजिनोनाद् भगणादिशनिः षड्कृत्वगखचन्द्रैः।**
**खशराब्धिशून्यवसुभिर्लिप्तोनोऽङ्गारकादीनाम् ॥५॥**

सार्द्धश्चासाविन्दुश्च सार्द्धेन्दुः। नव च जिनाश्च तैरूनः सार्द्धेन्दुनवजिनोनः तस्मात् सार्द्धेन्दुनवजिनोनात्। कुतः। अहर्गणादिति। भगणादिशनिरिति। भगणा आदौ यस्य सः भगणादिः भगणादिश्चासौ शनिश्च। भगणादिशनिः चक्रादिसौर इत्यर्थः। षड्कृत्वगखचन्द्रैरिति। षट् च कृतवश्च अगाश्च खं च चन्द्रश्च ते। तैः षड्कृत्वगखचन्द्रैः अहर्गणाद् भगणादिशनिर्लभ्यते इत्यर्थः। खशराब्धिशून्यवसुभिर्लिप्तोन इति। खं च शराश्च अब्धयश्च शून्यञ्च वसवश्च ते। तैः खशराब्धिशून्यवसुभिः अहर्गणाल्लिप्तादिफलेनोनः करणीयः इत्यर्थः। अङ्गारक आदिर्येषां ते अङ्गारकादयः। तेषामङ्गारकादीनामित्युत्तरसम्बन्धो भविष्यतीति वाक्यार्थः।

करणम्। इष्टाहर्गणं संस्थाप्य तस्मात् सार्द्धेन्दुनवजिनान् एतान् संशोध्य सहस्रद्वयेन शतचतुष्टयेनैकनवत्यधिकेनेत्यर्थः २४९१।३० एतान् संशोध्य शेषस्य षड्कृत्वगखचन्द्रैर्भागो हर्त्तव्यः। सहस्रेदशभिः शतैः सप्तभिः षट्षष्ट्याधिकैः १०७६६ एतैर्भागे हृते भगणास्त्याज्याः। भगणशुद्धशेषात् भौमवत् राश्यादिशनिर्भवति। भूयोऽप्यहर्गणस्य खशराब्धिशून्यवसुभिर्भागो हर्त्तव्यः। अशीतिसहस्रैः शतैश्चतुर्भिः पञ्चाशदधिकैरित्यर्थः। ८०४५०। एतैर्भागे हृते लिप्तादिफलं भवति। एतत् पूर्व्वागतात् शनैश्चरात् संशोध्य ततस्तस्माद् विलिप्तात्रयं शोधनीयं तिसृभिः शनिरिति वचनात्। एवं कृते यद् भवति सोऽर्द्धरात्रिको मध्यमो लङ्कायां शनिः स्यात्। अथ शनिभुक्त्यर्थमहर्गणः १। अस्मात् षड्कृत्वगखचन्द्रैर्भागे हृते शेषम् १। अस्माद् ग्रहवत् राश्यादिका सौरभुक्तिः ०।०।२।०। अथ भूयोऽप्यहर्गणः। अस्मात् खशराब्धिशून्यवसुभिर्भागे हृते विलिप्तापि न प्राप्ता। अतएव लिप्ताद्वयं सौरस्य मध्यमा भुक्तिः।

अथोदाहरणम्। तद् यथा। इष्टदिनाहर्गणः ७२६७५ अस्मात् सार्द्धेन्दुनवजिनानिमान् २४९१।३० संशोध्य शेषं ७०१८३।३० अस्य षड्कृत्वगखचन्द्रैर्भागे हृते भगणशुद्ध-शेषमिदं ५५८७।३० अत्र पूर्व्ववद् राश्यादिशनिः ६।६।५०।१७। अथ भूयोऽप्यहर्गणः ७२६७५ अस्य खशराब्धिशून्यवसुभिः ८०४५० भागे हृते लिप्तादिफलं ०।४५। एतत् पूर्व्वागतात् शनेः संशोध्य विलिप्तात्रयं च जातः आर्द्धरात्रिको लङ्कायां मध्यमः शनिः ६।६।४९।२०।

सौरभुक्तिर्मध्यमा पूर्व्वमेवोदाहृतेति। एवं सौरमध्यमानयनं यत्र ते ग्रहा लङ्कायां मध्यमार्द्धरात्रिका आगताः। त एवोज्जयिनी-याम्योत्तर-रेखायां मध्यमार्द्धरात्रिका भवन्ति। रेखायाः प्राग्देशेषु देशान्तर-स्वफलेनोना अर्द्धरात्रिकाः स्वदेशमध्यमा भवन्ति। रेखायाश्चापरदेशेषु देशान्तर-स्वफलेनाधिका अर्द्धरात्रिकाः स्वदेशे मध्यमा भवन्ति। देशान्तरकर्म्म च तिथ्याद्यानयनाध्याये व्याख्यातम्। एवं मध्यमग्रहाणामानयनम्।

अधुना भौमादीनां मन्दोच्चानयनम्—

**मन्दांशा दशगुणिता रुद्रा द्वियमाश्च षोडशाष्टजिनाः।**

रुद्राश्च द्वियमाश्च षोडश च अष्टौ च जिनाश्च एते एव दशगुणिता मन्दोच्चांशा भवन्ति। केषामङ्गारकादीनामिति। प्रागार्य्याभिहितं यथासंख्यं भौमबुधजीवसितसौराणामिति वाक्यार्थः।

करणम्। रुद्रा एकादश। ते दशगुणिता दशोत्तरशतं भौममन्दांशाः। द्वियमाः द्वाविंशति। एते दशगुणाः शतद्वयं विंशत्यधिकं बुधमन्दांशाः। षोडश दशगुणाः षष्ट्यधिकं शतं जीवमन्दांशाः। अष्टौ दशगुणाः अशीतिः सितमन्दांशाः। जिना दशगुणाः शतद्वयं चत्वारिंशदधिकम् शनि-मन्दांशाः। अङ्केनापि यथाक्रमं लिख्यते—

| म | बु | वृ | शु | श |
|---|---|---|---|---|
| ११० | २२० | १६० | ८० | २४० |

अंशानां त्रिंशता भागे हृते राश्यादीनि भौमादीनां मन्दोच्चानि। यथा—

३।२०
७।१०
५।१०
२।२०
८।०

अधुना शुक्रादीनां मन्दफल-संस्कारार्थमाह—

**शुक्रस्य सूर्य्यवत् फलमिन्दुसुतस्य द्विसंगुणितम् ॥६॥**

**भौमस्य पञ्चगुणितं गुरोः स्वरांशेन संयुतं द्विगुणम्।**

**सौरेर्मनुभागयुतं चतुर्गुणं शीघ्रकेन्द्रांशैः ॥७॥**

शुक्रस्य सूर्यवत् सूर्येण तुल्यं सूर्यवत्। यथा सूर्यस्यापि कृतं फलं धनमृणं वा तथा शुक्रस्यापि करणीयमित्यर्थः। इन्दुसुतस्य द्विसंगुणितम्। इन्दुसुतो बुधस्तस्य द्वाभ्यां संगुणितम्। बुधस्य मन्दकर्म्मणि यत् फलं तद् द्विगुणं कार्य्यमित्यर्थः। भौमस्य पञ्चगुणितमिति। भौमस्य मन्दफलं पञ्चभिर्गुणनीयम्। यत् गुरोर्मन्दफलं तत् स्वकीयेन स्वरांशेन संयुतं द्विगुणं करणीयमित्यर्थः। सौरेर्मनुभागयुतं चतुर्गुणमिति। सौरेर्मन्दफलं मनुभागयुतं चतुर्दशभागाधिकं चतुर्गुणमित्यर्थः। एवंविधं तत् चतुर्गुणं चतुर्भिर्गणनीयमित्यर्थः। शीघ्रकेन्द्रांशैरिति। शीघ्रकर्म्मणि केन्द्रं शीघ्रकेन्द्रम्। तस्यांशाः शीघ्रकेन्द्रांशाः तैः शीघ्रकेन्द्रांशैः। भौमोऽष्टयमांशैरित्येवमादिसम्बन्धो भविष्यतीति वाक्यार्थः।

करणम्। सूर्य्यवद् इति प्रत्येकस्य ग्रहस्य सम्बध्यते। शुक्रस्य केन्द्रात् पञ्चगुणाद्यैः खण्डकैः सूर्य्यवत् फलमानेयम्। तद्द्विगुणं बुधस्य मन्दफलं भवति। भौमस्य मन्दकेन्द्रात् पञ्चगुणाद्यैर्यत् फलमागतं तत् पञ्चगुणं भौमस्य मन्दफलं भवति। जीवस्य मन्दकेन्द्रात् पञ्चगुणाद्यैः फलमानीय तद्द्विश्लिष्टं कृत्वा सप्तभिर्भजेत्। अवाप्तं द्विगुणे पृथक्स्थे संयोज्य जीवमन्दफलं भवति। अत्र समासकरणात् ज्ञायते। यथा स्वरांशं द्विगुणे फले संयोज्यते। अथवा स्वरांशेन संयुतं कृत्वा द्विगुणं क्रियते। समासकरणाद् इति। सौरेर्मन्दकेन्द्रात् पञ्चगुणाद्यैः सूर्य्यवत् फलमानीय तस्य पृथक्स्थस्य चतुर्दशभिर्भागे हृते यदवाप्यते तत् पृथक्स्थे संयोज्य चतुर्गुणं कृत्वा शनेर्मन्दफलं भवति। शीघ्रकेन्द्रांशैरिति। भौमादीनां प्रत्येकस्य ग्रहस्य शीघ्रकर्म्मणि दर्शयिष्यामः। अथ शीघ्रकेन्द्रांशैर्भौमस्य स्फुटीकरणमाह—

भौमोऽष्टयमैः रुद्रान् भुक्त्वा पूर्व्वादितोरदैरर्कान्।
खगुणैर्दशरूपगुणैः सप्तांशा मनुभिरर्द्धांशान् ॥८॥

धनमृणमग्निशशाङ्कैस्त्रीनष्ट्या भास्करानतो वक्री।
नवभिस्त्रयोदशनगैर्द्वादशसार्द्धान् विलोमोऽतः ॥९॥

करणम्। इष्टदैवसिकमिष्टकालिकं मध्यमार्कं स्थापयेत्। यस्मात् स एव भौमस्य शीघ्रम्। ततोऽनन्तरं द्वितीयस्थाने इष्टदैवसिकमिष्टकालिकं

मध्यमं भौमं संस्थापयेत्। तस्मात् चारं भौमोऽष्टयमैः स्थापयेत्। ततः शीघ्रात् मध्यमं भौमं संशोध्य शीघ्रकेन्द्रं भवति। यस्माद् वक्ष्यति। शीघ्रं मध्योनकं केन्द्रमिति। शीघ्रकेन्द्रं भागपिण्डं कारयेत्। भागपिण्डाद् यदा अष्टाविंशतिर्भागा न शुध्यन्ते किञ्चिदवशिष्यते तदा भागपिण्डमेकादशभिः संगुण्याष्टाविंशतिभिर्विभज्यावाप्तं फलं धनं भवति। तत्र भागादिः। अथ भागपिण्डात् अष्टाविंशतिभागाः शुध्यन्ते न किञ्चिदवशिष्यते तदा एकादशभागा फलं धनं भवति। तस्मिंश्चाहनि भौमस्य पूर्व्वस्यां दिश्युदयो ज्ञेयः। एतच्च केन्द्रे यदा राशिस्थाने शून्यं भागाश्चाष्टाविंशतिर्भवन्ति। तदा सम्भवति। अथ भागपिण्डात् अष्टाविंशतिभागाः शुध्यन्ते। ततः परं द्वात्रिंशच्च शुध्यन्ते तदा विकलं द्वादशभिः सङ्गुण्य द्वात्रिंशता विभजेत्। अवाप्तं भागादि एकादशसु संयोज्य फलं धनं भवति।

अथ भागपिण्डात् अष्टाविंशतिर्द्वात्रिंशच्च शुध्यन्ते ततः परं त्रिंशच्च शुध्यन्ते। तदा विकलं दशाहतं कृत्वा त्रिंशता विभजेत्। अवाप्तं भागाः त्रयोविंशतिषु संयोज्य फलं धनं भवति। अथ भागपिण्डादष्टाविंशति-द्वात्रिंशत् त्रिंशच्च शुध्यन्ते। ततः परं एकत्रिंशच्च शुध्यन्ते। तदा विकलं सप्तहतं एकत्रिंशता विभजेत्। अवाप्तं भागादि त्रयस्त्रिंशत्सु संयोज्य फलं धनं भवति। अथ भागपिण्डात् अष्टाविंशतिः, द्वात्रिंशत्, त्रिंशत्, एकत्रिंशत् च शुध्यन्ते। चतुर्दश च न शुध्यन्ते। तदा विकलस्यार्द्धां-शेनाहतस्य चतुर्दशभिर्भागे हृतेऽवाप्तं चत्वारिंशत्सु संयोज्य फलं धनं स्यात्। अथ भागपिण्डात् अष्टाविंशतिः, द्वात्रिंशत्, त्रिंशत्, एकत्रिंशत् चतुर्दश च शुध्यन्ते। न किञ्चिदवशिष्यते तदा परं फलं धनं चत्वारिंशद्भागाः सार्द्धा भवन्ति। एतत् शीघ्रकेन्द्रे यदा राशिचतुष्कं भवति भागाश्च पञ्चदश तदा परं फलं धनं भवति। परं च केन्द्रं ४।१५।०।०। अथ धनकेन्द्राधिकं शीघ्रकेन्द्रं भवति। तदा शीघ्रकेन्द्रात् धनकेन्द्रमपास्य शेषं भागपिण्डं कार्यम्। तस्माद् भागपिण्डात् यदा त्रयोदशभागपिण्डा न शुध्यन्ते तदा

| | | |
|---|---|---|
| २८ | ११ | |
| ३२ | १२ | + |
| ३० | १० | |
| ३१ | ७ | |
| १४ | ०।३० | |
| १३ | ३ | |
| १६ | १२ | − |
| ८ | १३ | |
| ७ | १२।३० | − |

विकलं त्रिभिः संगुण्य त्रयोदशभिर्विभजेत्। अवाप्तं फलमृणं भागादिर्भवति। तत् धनफलात् चत्वारिंशतः सार्द्धायाः संशोध्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् त्रयोदश शुध्यन्ते। ततः परं षोडश न शुध्यन्ते तदा विकलं द्वादशाहतं षोडशभिर्विभज्यावाप्तं भागादिफलं त्रिषु संयोज्य यद् भवति तत् चत्वारिंशत्सार्द्धायाः संशोध्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् त्रयोदश च षोडश च शुध्यन्ते न किञ्चिदवशिष्यते तदा पञ्चदशभागा ऋणं चत्वारिंशत्सार्द्धायां संशोध्य शेषं फलं धनं स्यात्। तस्मिन् दिने भौमो वक्री ज्ञेयः। एतच्च शीघ्रकेन्द्रे यदा राशिपञ्चकं चतुर्द्दशभागाधिकं भवति।५।१४।०।० अथ शेषभागपिण्डात् त्रयोदश षोडश च शुध्यन्ते। तदा विकलं त्रयोदशहतं नवभिर्विभजेत्। अवाप्तं भागादिफलं पञ्चदशसु संयोज्य यद् भवति तच्चत्वारिंशतः सार्द्धायाः संशोध्य शेषं फलं धनं भवति। अथ भागपिण्डात् त्रयोदश षोडश नव च शुध्यन्ते। ततः परं सप्त न शुध्यन्ते। तदा विकलं द्वादशभिः सार्द्धैः संगुण्य सप्तभिर्विभजेत्। अवाप्तं भागादि अष्टाविंशतौ संयोज्य यद् भवति तच्चत्वारिंशतः सार्द्धायाः संशोध्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् त्रयोदश षोडश नव सप्त च शुध्यन्ते। न किञ्चिदवशिष्यते तदा फलं चत्वारिंशत्सार्द्धभागादि ऋणं भवति। धनफलात् चत्वारिंशतः सार्द्धायाः संशोध्य न किञ्चिदवशिष्यते तदा शीघ्रफलाभावः। एतच्च शीघ्रकेन्द्रे यदा राशिषट्कं भवति तदा सम्भवति ६।०।०।०। अथ यदा शीघ्रकेन्द्रं राशिषट्काधिकं भवति ततस्तस्माद् राशिषट्कमपास्य शेषं भागपिण्डं कार्य्यम्। तस्माद् भागपिण्डात् यदा सप्त न शुध्यन्ते तदा विकलं द्वादशभिः सार्द्धैः संगुण्य सप्तभिर्भजेदवाप्तं भागादि ऋणं भवति। अथार्द्धचक्रोनात् भागपिण्डात् सप्त शुध्यन्ते ततः परं नव न शुध्यन्ते तदा विकलं त्रयोदशभिः संगुण्य नवभिर्भजेत्। अवाप्तभागा द्वादशसु सार्द्धेसु संयोज्य ऋणं फलं भवति। अथार्द्धचक्रोनाद् भागपिण्डात् सप्त नव च शुध्यन्ते। अतः परं न किञ्चिदवशिष्यते तदा तस्मिन् दिने भौमो न वक्री ज्ञेयः। एतत् शीघ्रकेन्द्रे यदा राशिषट्कं षोडशभागाधिकं भवति तदा सम्भवति ६।१६।०।० अर्द्धचक्रोनभागपिण्डात् सप्त शुध्यन्ते, ततः परं नव च शुध्यन्ते, ततः परं षोडश शुध्यन्ते, अतःपरं त्रयोदश न शुध्यन्ते। तदा विकलं त्रिभिः संगुण्य

त्रयोदशभिर्विभजेत्। अवाप्तं सप्तविंशतः सार्द्धायाः संयोज्य फलमृणं भवति। अथ चक्रार्द्धोनाद् भागपिण्डात्सप्त, नव, षोडश, त्रयोदश च शुध्यन्ते। न किञ्चिदवशिष्यते। तदा चत्वारिंशत्सार्द्धाः परमऋणफलं भवति। एतच्च यदा शीघ्रकेन्द्रे राशिसप्तकं पञ्चदशभागा भवन्ति। केन्द्राद् ऋणकेन्द्रमपास्य शेषं भागपिण्डं कार्य्यम्। तस्माद् यदा चतुर्द्दश न शुध्यन्ते विकलस्य सार्द्धाशेनाहतस्य चतुर्द्दशभिर्भागे हृतेऽवाप्तं भागादिफलं भवति। तच्चत्वारिंशत्सार्द्धायाः संशोध्य फलमृणं भवति। अथ शेषभागपिण्डात् चतुर्द्दश शुध्यन्ते, अतःपरं एकत्रिंशच्च शुध्यन्ते, तदा विकलं सप्ताहतमेकत्रिंशता विभजेत्। अवाप्तं भागा अर्द्धे संयोज्य फलं धनं भवति। तच्च चत्वारिंशतः सार्द्धायाः संशोध्य शेषफलमृणं भवति। अथ शेषभागपिण्डात् चतुर्द्दश शुध्यन्ते। ततःपरमेकत्रिंशत् शुध्यन्ते। अतःपरं त्रिंशच्च शुध्यन्ते। तदा विकलं दशाहतं त्रिंशता विभजेत्। सप्तसु सार्द्धेषु संयोज्य फलं धनं भवति। तच्च चत्वारिंशत्सार्द्धायाः संशोध्य शेषमृणफलं भवति। अथ शेषभागपिण्डात् चतुर्द्दशैकत्रिंशत् द्वात्रिंशच्च शुध्यन्ते। अतःपरं न किञ्चिदवशिष्यते। तदैकोनत्रिंशत्सार्द्धा भागाः फलं धनं भवति। तच्च चत्वारिंशत्सार्द्धायाः संशोध्य शेषमृणं फलं भवति। तस्मिन् दिने भौमस्य पश्चार्द्धेऽस्तमयो ज्ञेयः। एतच्च शीघ्रकेन्द्रे राश्येकादशकं द्विभागाधिकं भवति। ११।२।०।०। तदा सम्भवति। अथ शेषभागपिण्डात् चतुर्दशैकत्रिंशद् त्रिंशद् द्वात्रिंशच्च शुध्यन्ते ततः परमष्टाविंशतिर्न शुध्यन्ते। तदा विकलमेकादशभिः संगुण्याष्टाविंशत्या भागमपहृत्यावाप्तमेकोनत्रिंशत्सार्द्धायाः संयोज्य धनं भवति। एतच्चत्वारिंशत्सार्द्धायाः संशोध्य शेषमृणं फलं स्यात्। अथ शेषभागपिण्डात् चतुर्द्दशैकत्रिंशद् त्रिंशद् द्वात्रिंशदष्टाविंशतिश्च शुध्यन्ते। न किञ्चिदवशिष्यते। तदा चत्वारिंशत्सार्द्धा भागाः फलं धनं भवति। तद्धनफलाच्चत्वारिंशत्सार्द्धाया अपास्य न किञ्चिदवशिष्यते। तदापि शीघ्रफलाभावः एतच्च शीघ्रकेन्द्रे यदा राशिद्वादशकं भवति तदा सम्भवति १२।०।०।०। एवं यथासम्भवं शीघ्रफलमुत्पाद्य तच्चार्द्धं कार्य्यम्। तत्करणागते मध्यमे ग्रहे धनमृणं वा कार्य्यम्। वक्ष्यतीति। धनफलादागतं धनं ऋणफलादागतं ऋणम्। एवं कृत्वैककर्मा भौमो भवति। यस्माद् वक्ष्यति शीघ्रफलार्द्धमनष्टमिति।

ततस्तस्माद् राशित्रयमंशकाश्च विंशतिः मन्दकेन्द्रं भवति। ततस्तस्मादर्कवत् फलमानीय तत् पञ्चगुणं कार्य्यम्। यस्मादुक्तं भौमस्य पञ्चगुणितमिति। तदर्द्धं कार्य्यम्। एतदेककर्म्म संस्कृते मध्यमभौमे षड्राश्यूने ऊनमधिके धनमिति। यस्माद् वक्ष्यति—मन्दफलार्द्धं चेति। ततस्तस्मात् द्विकर्म्मसंस्कृताद् भौमान् मन्दोच्चमपास्य केन्द्रं भवति। तस्मादर्कवत् फलमानीय तत् पञ्चगुणं कृत्वा सकलं करणागते मध्यमे षड्राश्यूने मन्दकेन्द्रे ऋणमधिके धनं कार्यम्। यस्मात् वक्ष्यति मन्दशीघ्रफले सकले मध्य इति। एवं कृते मन्दस्फुटो भौमो भवति। ततो मन्दस्फुटाद् भौमात् शीघ्रकेन्द्रं भवति। यस्माद् वक्ष्यति। शीघ्रं मध्योनकं केन्द्रमिति। तस्मात् पूर्व्ववत् शीघ्रफलमानीय तत् सकलं मन्दस्फुटे भौमे धनादागतं धनं कार्य्यमृणादागतं ऋणं कार्य्यम्। एवं कृते स्फुटो भौमो भवति। यस्माद् वक्ष्यति—मन्दशीघ्रफले सकले मध्ये स्पष्ट इति। अथ भौमशीघ्रभुक्तिरियम्। ५८।८ अस्यां भौममध्यमभुक्तिमिमां ३१।२६ संशोध्य शेषं २०।४२ एतत् प्रथमकर्म्मणि यत् ग्रहगुणकार आसीत् तेन संगुण्य तेनैव भागापहारेण विभज्यावाप्तं लिप्तादिफलम्। तदधिकृत्य धनादागतं धनं ऋणादागतं ऋणं कार्य्यं मध्यम भुक्तावत्र। ततो भूयोऽपि द्वितीयगुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं भवति। तत् पञ्चगुणं कृत्वार्धीकार्य्यम्। तदेककर्म्मकृतायां भौममध्यमभुक्तौ मकरादिमन्दकेन्द्रे ऋणं कर्कादौ धनं कार्य्यम्। यस्माद् उक्तम्—प्राग्वत् शुक्रादीनां क्षयधनधनहानयः स्वगतौ। एवं कृते द्विकर्म्मकृता भौमभुक्तिर्भवति। वा तृतीयकर्म्मोद्भव गुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं भवति। तत् पञ्चगुणं कृत्वा सकलं कर्कटादौ धनं मकरादौ ऋणं कार्य्यम्। भौमभुक्तावत्र ३१।२६ एवं कृते मन्दस्फुटा भुक्तिर्भवति। तां शीघ्रभुक्तेरपास्य अस्या ५८।८ शेषं चतुर्थकर्म्मोद्भवगुणकारेण संगुण्य तेनैव भागहारेण विभज्यावाप्तलिप्तादिफलं भवति। तत् सकलं मन्दस्फुटायां भुक्तौ धनागतं धनमृणागतमृणं कार्य्यम्। एवं कृते स्फुटा भौमभुक्तिर्भवति। यस्माद् वक्ष्यति। कार्य्यैवं स्फुटभुक्तिरिति। अथ चेद् ऋणगतफलमधिकं स्यात् तदा विपरीतशोधनं कृत्वा वक्रा भुक्तिः स्यात्। एवं भौमभुक्तिस्फुटीकरणम्। अधुना शीघ्रकेन्द्रांशैः बुधफलानयनमाह।

एकेषुभिस्त्रयोदश भुक्त्वाऽभ्युदितोऽपरेण सोमसुतः ।
अष्टाग्निभिः स्वरान् शशिगुणैः सार्द्धांशकं स्वमृणमस्मात् ॥१०॥
षड्विंशत्या विषयान् वक्री नवभिर्दलाधिकं त्रितयम् ।
अपरेऽस्तमितस्तत्त्वैस्त्रयोदशांशान् विलोमः प्राक् ॥११॥

बुधचारान् संस्थापयेत् । तेषां स्थापना—

| | | |
|---|---|---|
| ५१<br>३८<br>३१ | १३<br>७<br>१।३० | + |
| २६ | ५ | |
| ८ | ३।३० | − |
| २५ | १२ | |

ततः शीघ्रात् मध्यमं बुधं संशोध्य शीघ्रकेन्द्रं भवति । ततः शीघ्रकेन्द्रं भागपिण्डीकार्य्यम् । यदि यस्मात् भागपिण्डादेकपञ्चाशन्न शुध्यन्ते ततो विकलं त्रयोदशभिः संगुण्य एकपञ्चाशता विभज्यावाप्तं भागादिफलं धनं स्यात् । अथ यदा भागपिण्डादेकपञ्चाशत् शुध्यन्ते न किञ्चिदवशिष्यते तदा त्रयोदशभागाः फलं धनं भवति । तस्मिंश्च दिने बुधः पश्चिमायां दिशि उदयं करोति । अथ भागपिण्डादेकपञ्चाशत् शुध्यन्ते, ततः परमष्टत्रिंशन्न शुध्यन्ते तदा विकलं सप्तभिः संगुण्य अष्टत्रिंशता विभज्यावाप्तं त्रयोदशसु संयोज्य फलं धनं भवति । अथ भागपिण्डादेकपञ्चाशदष्टत्रिंशच्च शुध्यन्ते ततः परमेकत्रिंशन्न शुध्यन्ते । तदा विकलं सार्द्धेन संगुण्य एकत्रिंशता विभज्यावाप्तं भागादि विंशतौ संयोज्य फलं धनं भवति । अथ भागपिण्डादेकपञ्चाशदष्टत्रिंशद् एकत्रिंशच्च शुध्यन्ते , न किञ्चिदवशिष्यते तदैकविंशतिर्भागाः सार्द्धाः परमफलं भवति । एतच्च यदा शीघ्रकेन्द्रे राशिचतुष्कं भवति तदा सम्भवति । ४।०।०।० एतद्धनकेन्द्रं । यदा धनकेन्द्रात् शीघ्रकेन्द्रमधिकं भवति तदा तस्माद् धनकेन्द्रमपास्यावशेषं पिण्डीकार्य्यम् । तस्मात् भागपिण्डात् । अथ षड्विंशति र्न शुध्यन्ते

तदा विकलं पञ्चहतं षड्विंशत्या विभज्यावाप्तं भागादिफलमृणं भवति। तदेकविंशतेः सार्द्धायाः संशोध्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् षड्विंशतिः शुध्यन्ते न किञ्चिदवशिष्यते। तदा फलं पञ्चभागा ऋणं भवति। तदेकविंशत्याः सार्द्धायाः संशोध्य शेषं फलं धनं भवति। तस्मिन् दिने बुधो वक्री ज्ञेयः। एतच्च शीघ्रकेन्द्रे यदा राशिचतुष्कं षड्विंशतिर्भागाश्च भवन्ति। तदा सम्भवति ४।२६।०।०। अथ शेषभागपिण्डात् षड्विंशतिः शुध्यन्ते अतःपरं नव न शुध्यन्ते तदा विकलं त्रिभिः सार्द्धैः सङ्गुण्य नवभिर्विभज्यावाप्तं पञ्चसु संयोज्य फलमृणं भवति। तदेकविंशतेः सार्द्धायाः संशोध्य शेषफलं धनं भवति। अथ शेषपिण्डात् षड्विंशतिः शुध्यन्ते, नव च शुध्यन्ते, न किञ्चिदवशिष्यते, तदा फलमष्टभागाः सार्द्धाः ऋणं भवति। तदेकविंशतेः सार्द्धायाः संशोध्य शेषं फलं धनं भवति। तस्मिन् दिने पश्चार्द्धे बुधस्यास्तमयो ज्ञेयः। एतच्च शीघ्रकेन्द्रे राशिपञ्चकं पञ्चभागाधिकं भवति। तदा सम्भवति ५।५।०।०। अथ शेषभागपिण्डात् षड्विंशतिः नव च शुध्यन्ते अतःपरं पञ्चविंशतिर्न शुध्यन्ते तदा विकलं त्रयोदशाहतं पञ्चविंशत्या विभज्यावाप्तं फलम् अष्टसु सार्द्धेषु संयोज्य फलमृणं भवति। तदेकविंशतेः सार्द्धायाः संशोध्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् षड्विंशतिः नव पञ्चविंशतिश्च शुध्यन्ते तदा एकविंशतिः सार्द्धा भागाः परमृणं फलं भवति। तद्धनं फलादेकविंशतेः सार्द्धायाः संशोध्य न किञ्चिदवशिष्यते। तदा शीघ्रफलाभावः। एतच्च शीघ्रकेन्द्रे राशिषट्के भवति। तदा सम्भवति ६।०।०।०। अर्द्ध-चक्रादधिकं शीघ्रकेन्द्रं भवति। तदार्द्धचक्रमपास्य शेषं भागपिण्डीकार्य्यम् तस्माद् भागपिण्डात् यदा पञ्चविंशतिर्न शुध्यन्ते तदा विकलं त्रयोदशभिः संगुण्य पञ्चविंशत्यावाप्तं भागादिफलमृणं भवति। अथार्द्धचक्रोनभागपिण्डात् पञ्चविंशतिः शुध्यन्ते न किञ्चिदवशिष्यते तदा त्रयोदशभागाः फलमृणं भवति। तस्मिंश्चाहनि पूर्व्वार्द्धे बुधोदयो ज्ञेयः। एतच्च यदा केन्द्रे राशिषट्कं पञ्चविंशतिभागाधिकं भवति। तदा सम्भवति ६।२५।०।०। अथार्द्धचक्रोनाद् भागपिण्डात् पञ्चविंशतिर्नव च शुध्यन्ते, न किञ्चिदवशिष्यते। तदा षोडश भागाः सार्द्धाः फलमृणं भवति। तस्मिंश्चाहनि बुधोऽनुवक्री ज्ञेयः। एतच्च यदा केन्द्रे राशिसप्तकं

चतुर्भागाधिकं भवति तदा सम्भवति ७।४।०।०। अथार्द्धचक्रोन भागपिण्डात् पञ्चविंशतिर्नव च शुध्यन्ते। अतःपरं षड्विंशतिर्न शुध्यन्ते तदा विकलं पञ्चहतं षड्विंशत्या विभज्यावाप्तं षोडशसु सार्द्धेषु संयोज्य फलमृणं भवति। अथार्द्धचक्रोनभागपिण्डात् पञ्चविंशतिर्नव षड्विंशतिश्च शुध्यन्ते। अतःपरं किञ्चिन्नावशिष्यते। तदेकविंशतिः सार्द्धा भागाः परमफलमृणं भवति। एतच्च शीघ्रकेन्द्रे यदा राश्यष्टकं भवति तदा सम्भवति ८।०।०।०। एतदृणकेन्द्राद् यदा केन्द्रमधिकं भवति तदा ऋणकेन्द्रं विशोध्य शेषं भागपिण्डोकार्य्यम्। तस्माद् भागपिण्डात् यदा एकत्रिंशच्च शुध्यन्ते तदा विकलमध्यर्द्धहतमेकत्रिंशता विभज्यावाप्तं भागादिफलं धनं भवति। तद्धनफलाद् एकविंशतेः सार्द्धायाः अपास्य शेषफलमृणं भवति। अथ भागपिण्डादेकत्रिंशत् शुध्यन्ते, अतः परमष्टत्रिंशच्च शुध्यन्ते, तदा विकलं सप्तहतमष्टत्रिंशत्या विभज्यावाप्तमध्यर्द्धे संयोज्य फलं धनं भवति। तदेकविंशतेः सार्द्धायाः अपास्य शेषमृण-फलं भवति। अथ शेषभागपिण्डादेकत्रिंशदष्टत्रिंशच्च शुध्यन्ते न किञ्चिदव-शिष्यते। तदाष्टौ सार्द्धा भागाः फलं धनं भवति। तदेकविंशतेः सार्द्धायाः संशोध्य शेषं फलमृणं भवति। अत्र च दिने पूर्व्वार्द्धे बुधस्यास्तमयः। एतच्च शीघ्रकेन्द्रे यदा राशिदशकं नवभागाधिकं भवति तदा सम्भवति १०।८।०।०। अथ शेषभागपिण्डादेकत्रिंशदष्टत्रिंशच्च शुध्यन्ते। एक-पञ्चाशच्च शुध्यन्ते। तदा विकलं त्रयोदशहतमेकपञ्चाशता विभज्या-वाप्तमष्टसु सार्द्धेषु संयोज्य फलं धनं भवति। तदेकविंशतेः सार्द्धायाः संशोध्य शेषं फलमृणं भवति। अथ शेषभागपिण्डादेकत्रिंशदष्टत्रिंशद् एकपञ्चाशच्च शुध्यन्ते न किञ्चिदवशिष्यते तदेकविंशतेः सार्द्धा भागाः फलं धनं भवति। तद्धनफलादेकविंशतेः सार्द्धायाः संशोध्य न किञ्चिदवशिष्यते। तदा शीघ्रफलाभावः। एतच्च शीघ्रकेन्द्रे यदा राशिद्वादशकं भवति तदा सम्भवति १२।०।०।०।०। एवं यथासम्भवं भागादिफलं शैघ्रमुत्पाद्य तदर्द्धं कार्य्यम्। तन्मध्यमे बुधे धनादागतं धनमृणादागतमृणं कार्य्यम्। ततस्तस्माद् राशिसप्तकं दशभागाधिकं मन्दोच्चमपास्य शेषं मन्दकेन्द्रं भवति। तस्मादर्कवत् फलमानीय तद् द्विगुणं कार्य्यम्। इन्दुसुतस्य द्विगुणमिति वचनात्। ततस्तदप्यर्द्धं कार्य्यम्। तदेककार्य्यसंस्कृते षड्राश्यूने मन्दकेन्द्रे

ऋणम्। षड्राश्यधिके धनं कार्य्यम्। ततस्तस्माद् भूयोऽपि मन्दोच्चमपास्य केन्द्रं कार्य्यम्। तस्मादर्कवत् फलमानीय तत् द्विगुणं कृत्वा सकलं करणागते मध्यमे बुधे षड्राश्यूने केन्द्रे ऋणमधिके धनं कार्य्यम्। एवं कृते बुधो मन्दस्फुटो भवति। ततस्तं शीघ्रादपास्य शीघ्रकेन्द्रं कार्य्यम्। तस्मात् प्राग्वत् फलमानीय तत् सकलं मन्दस्फुटे बुधे धनमृणं वा कार्य्यम्। एवं कृते स्पष्टो बुधो भवति। अथ शीघ्रभुक्ति २४५।३२। अस्याः बुधभुक्तिमिमां ५९।८ संशोध्य शेषं १८६।२४। एतत् प्रथमकेन्द्रोद्भवगुणकारेण संगुण्य तद्भागापहारेण विभज्यावाप्तं लिप्तादिफलं भवति। तदधिकृत्य धनादागतं धनमृणादागतं ऋणं कार्य्यम्। बुधमध्यमभुक्तावत्र ५९।८। अथ द्वितीयकर्म्मोद्भवगुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं भवति। तद्द्विगुणीकृत्यार्धीकार्य्यम्। तदेक-कर्म्मसंस्कृतायां बुधभुक्तौ कर्कटादौ मन्दकेन्द्रे धनं मकरादौ ऋणं कार्य्यम्। ततस्तद् द्विकर्म्मकृतां भुक्तिं तृतीयकर्म्मोद्भवगुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं भवति। तद् द्विगुणं कृत्वा सकलं कर्कटादौ केन्द्रे धनं मकरादौ ऋणं कार्य्यं बुधस्य मध्यमगतावत्र।५९।८। एवं कृते मन्दस्फुटा भुक्तिर्भवति। ततस्तां बुधशीघ्रगतेरस्या २४५।३२ अपास्य चतुर्थकर्म्मोद्भवगुणकारेण संगुण्य तद्भागहारेण विभज्यावाप्तं लिप्तादिफलं तत् सकलं मन्दस्फुटायां भुक्तौ धनादागतं धनं ऋणादागतमृणं कार्य्यम्। एवं कृते स्फुटभुक्तिर्भवति। अथ चेदृणादागतं मन्दस्फुटभुक्तेः सकाशादधिकं फलं भवति। तदा विपरीतशोधनं कृत्वा तत्र वक्रा भुक्तिर्भवति। एवं बुधस्फुटीकरणम्। अधुना शीघ्रांशैर्जीवस्य फलानयनमाह।

मनुभिः सत्यंशौ द्वौ भुक्त्वा प्रागुद्गतः खवेदैः षट्।
षट्कृत्या त्रीन् धृत्या दशलिप्ता धनमृणोक्तिरतः ॥१२॥

द्विकयमलैरध्यर्द्धं वक्री मनुभिर्द्वयं नखैश्चतुरः
अष्ट्या चतुरो भागान् विपरीतमतः पुनर्जीवः ॥१३॥

| | |
|---|---|
| १४ | २।२० |
| ४० | ६ |
| ३६ | ३ |
| १८ | ०।१० |
| २२ | १।३० |
| १४ | २ |
| २० | ४ |
| १६ | ४ |

करणम्। इष्टदैवसिकमिष्टकालिकं मध्यमार्कं संस्थाप्य यस्मात् मध्यमजीवस्य चार्क एव शीघ्रम्। ततोऽनन्तरं द्वितीयस्थाने मध्यमं जीवं स्थापयेत्। जीवचारं चान्यत्र स्थाने लिखनीयमिति। ततः शीघ्रात् मध्यमजीवं संशोध्य शीघ्रकेन्द्रं भवति। तद् भागपिण्डं कृत्वा तस्मात् यदा चतुर्द्दश न शुध्यन्ते तदा विकलमंशद्वयेन सत्रिभागेन संगुण्य चतुर्द्दशभिर्विभज्यावाप्तं भागादिफलं धनं भवति। अथ भागपिण्डात् चतुर्द्दश शुध्यन्ते। न किञ्चिदवशिष्यते तदा सत्रिभागद्वयं फलं धनं भवति। अत्रैवाह्नि पूर्व्वस्यां दिशि जीवस्योदयो ज्ञेयः। एतच्च यदा शीघ्रकेन्द्रे भागचतुर्द्दशकं भवति तदा सम्भवति ।०।१४।०।०। अथ भागपिण्डात् चतुर्द्दश शुध्यन्ते। चत्वारिंशच्च शुध्यन्ते। तदा विकलं षड्भिः संगुण्य चत्वारिंशता विभज्यावाप्तं सत्रिभागे भागद्वये संयोज्य फलं धनं भवति। अथ भागपिण्डाच्चतुर्द्दश चत्वारिंशच्च शुध्यन्ते षट्त्रिंशच्च शुध्यन्ते। तदा विकलं त्रिगुणं षट्त्रिंशता विभज्यावाप्तं भागादिफलं सत्रिभागे भागाष्टके संयोज्य फलं धनं भवति। अथ भागपिण्डात् चतुर्द्दश चत्वारिंशत् षट्त्रिंशच्च शुध्यन्ते। अतः परमष्टादश न शुध्यन्ते। तदा विकलं लिप्तादशकेन ०।१०। संगुण्याष्टादशभिर्विभज्यावाप्तं सत्रिभागेष्वेकादशसु संयोज्य फलं धनं भवति। अथ भागपिण्डाच्चतुर्द्दश चत्वारिंशत् षट्त्रिंशदष्टादश च शुध्यन्ते न किञ्चिदवशिष्यते। तदा परमफलमेकादशभागाः सार्द्धा भवन्ति। एतच्च यदा शीघ्रकेन्द्रे राशित्रयमष्टादशभागाधिकं भवति

तदा सम्भवति ३।१८।०।०। एतद् धनकेन्द्रम्। यदा धनकेन्द्रात् शीघ्रकेन्द्रमधिकं भवति। ततस्तस्मात् धनकेन्द्रमपास्यावशेषं भागपिण्डं कार्य्यम्। ततो यथावशेषभागपिण्डात् द्वाविंशतिर्न शुध्यन्ते तदा विकलमध्यर्द्धेन सगुण्य द्वाविंशत्या विभज्यावाप्तं भागादिफलमृणं भवति। तद् धनफलादेकादश सार्द्धेभ्योऽपास्य शेषं धनं फलं भवति। अथ शेषपिण्डात् द्वाविंशतिः शुध्यन्ते न किञ्चिदवशिष्यते तदा सार्द्धभागा ऋणं भवति। तद् भागैकादश सार्द्धेभ्योऽपास्य शेषं फलं धनं भवति। तत्राद्दनि जीवो वक्री ज्ञेयः। एतच्च यदा शीघ्रकेन्द्रे राशिचतुष्टयं दशभागाधिकं भवति तदा सम्भवति ४।१०।०।०। अथ शेषभागपिण्डात् द्वाविंशतिः शुध्यन्ते चतुर्द्दश न शुध्यन्ते। तदा विकलं द्वाभ्यां संगुण्य चतुर्द्दशभिर्विभज्यावाप्तं भागाद्यमध्यर्द्धेन संयोज्य फलमृणं भवति। तदेकादशसार्द्धेभ्योऽपास्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् द्वाविंशतिः चतुर्द्दश च शुध्यन्ते। अतःपरं विंशतिर्न शुध्यन्ते। तदा विकलं चतुर्भिः संगुण्य विंशत्या विभज्यावाप्तं भागादिफलं त्रिषु सार्द्धेषु संयोज्य फलमृणं भवति। तदेकादशसार्द्धेभ्योऽपास्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् द्वाविंशतिश्चतुर्द्दशविंशतिः षोडश च शुध्यन्ते। न किञ्चिदवशिष्यते। तदा एकादशभागाः सार्द्धाः परमफलमृणं भवति। तद्धनफलादेकादश सार्द्धेभ्योऽपास्य न किञ्चिद् भवति तदा शीघ्रफलाभावः। एतच्च शीघ्रकेन्द्रे यदा राशिषट्कं स्यात् तदा सम्भवति। ६।०।०।०। अथ शीघ्रकेन्द्रमर्धचक्रादधिकं भवति। ततस्तस्मादर्धचक्रमपास्यावशेषं भागपिण्डं कार्य्यम्। ततस्तस्माद् भागपिण्डात् यदा षोडश न शुध्यन्ते तदा विकलं चतुर्भिः संगुण्य षोडशभिर्विभज्यावाप्तं भागादिफलमृणं भवति। अथार्द्धचक्रोनाद् भागपिण्डात् षोडश शुध्यन्ते। अतःपरं विंशतिर्न शुध्यन्ते। तदा विकलं चतुर्भिः संगुण्य विंशत्या विभज्यावाप्तं भागादिफलं चतुर्षु संयोज्य फलमृणं भवति। अथार्द्धचक्रोनाद् भागपिण्डात् षोडश विंशतिश्च शुध्यन्ते। अतःपरं चतुर्द्दश न शुध्यन्ते। तदा विकलं द्वाभ्यां संगुण्य चतुर्द्दशभिर्विभज्यावाप्तं फलमष्टसु संयोज्य फलमृणं भवति। अथार्द्धचक्रोनाद् भागपिण्डात् षोडश विंशतिश्चतुर्दश च शुध्यन्ते न किञ्चिदवशिष्यते तदा दश भागाः फलमृणं भवति। तत्र च दिने जीवोऽनुवक्री ज्ञेयः।

एतच्च यदा शीघ्रकेन्द्रे राशिसप्तकं विंशतिभागाधिकं भवति। तदा सम्भवति ७।२०।०।०।

अथार्द्धचक्रोनाद् भागपिण्डात् षोडश विंशतिश्चतुर्दश च शुध्यन्ते। द्वाविंशतिर्न शुध्यन्ते। तदा विकलमर्ध्देन संगुण्य द्वाविंशत्या विभज्यावाप्तं भागादि दशसु संयोज्य फलमृणं भवति। अथार्द्धचक्रोनाद् भागपिण्डात् षोडश विंशतिः चतुर्दश द्वाविंशतिश्च शुध्यन्ते। न किञ्चिदवशिष्यते। तदा परमफलमेकादशभागाः सार्द्धाः फलमृणं भवति। एतच्च यदा शीघ्रकेन्द्रे राश्यष्टकं द्वादशभागाधिकं भवति तदा सम्भवति ८।१२।०।०। एतदृणं केन्द्रम्। ऋणकेन्द्राद् यदा शीघ्रकेन्द्रमधिकं भवति ततस्तस्मादृणकेन्द्रमपास्य शेषं भागपिण्डीकार्य्यम्। तस्माद् भागपिण्डात् यदाष्टादश न शुध्यन्ते, तदा विकलं लिप्तादशकेन संगुण्याष्टादशभिर्विभज्यावाप्तं फलं धनं भवति। तद् ऋणादेकादशसार्द्धेभ्योऽपास्य शेषं फलमृणं भवति। अथ शेषभागपिण्डादष्टादश शुध्यन्ते षट्त्रिंशच्च शुध्यन्ते तदा विकलं त्रिभिः संगुण्य षट्त्रिंशता विभज्यावाप्तं दशसु लिप्तासु संयोज्य फलं धनं भवति। तदृणफलादेकादशसार्द्धेभ्योऽपास्य शेषं फलमृणं भवति। अथ शेषभागपिण्डादष्टादश षट्त्रिंशच्च शुध्यन्ते ततः परं चत्वारिंशच्च शुध्यन्ते तदा विकलं षड्भिः संगुण्य चत्वारिंशता विभज्याप्तं दशलिप्ताधिकेषु त्रिषु संयोज्य फलं धनं भवति। तदृणफलादेकादशसार्द्धेभ्योऽपास्य शेषं फलमृणं भवति। अथ शेषभागपिण्डादष्टादश षट्त्रिंशच्चत्वारिंशच्च शुध्यन्ते न किञ्चिदवशिष्यते। तदा नव भागाः षड्भागसहिताः फलं धनं भवति। तदृणफलादेकादशसार्द्धेभ्योऽपास्य शेषं फलमृणं भवति। अथ शेषभागपिण्डात् अष्टादशषट्त्रिंशच्चत्वारिंशच्च शुध्यन्ते न किञ्चिदवशिष्यते। तदा नव भागाः षड्भागसहिताः फलं धनं भवति। तदृणफलादेकादशसार्द्धेभ्योऽपास्य शेषं फलमृणं भवति। तस्मिंश्चाहनि पश्चार्द्धे जीवस्यास्तमयो ज्ञेयः। एतच्च यदा शीघ्रकेन्द्रे राश्येकादशकं षोडशभागाधिकं भवति तदा सम्भवति। ११।१६।०।० । अथ शेषभागपिण्डादष्टादश षट्त्रिंशत् चत्वारिंशच्च शुध्यन्ते ततः परं चतुर्दश न शुध्यन्ते। तदा विकलं भागद्वयेन संगुण्य चतुर्दशभिर्विभज्याप्तं भागादि नवसु षड्भागाधिकेषु संयोज्य फलं धनं भवति।

तद्दणादेकादश सार्द्धेभ्योऽपास्य शेषमृणफलं भवति। अथ शेषभागपिण्डा-दष्टादश षट्त्रिंशत् चत्वारिंशच्चतुर्द्दश च शुध्यन्ते न किञ्चिदवशिष्यते। तदेकादशभागाः सार्द्धाः परमफलं धनं भवति। तद्दणफलादेकादशसार्द्धे-भ्योऽपास्य न किञ्चिदवशिष्यते। तदा शीघ्रफलाभावः। एतच्च शीघ्र-केन्द्रे राशिद्वादशकं भवति। १२।०।०।० एवं यथासम्भवमादिशीघ्रफलं कृत्वा तदर्द्धीकृत्य पृथक् मध्यमे जीवे धनादागतं धनमृणादागतमृणं कार्य्यम्। ततस्तस्माद् राशिपञ्चकं दशभागाधिकं मन्दोच्चमपास्य मन्द-केन्द्रं भवति। ततस्तस्मादर्कवत् फलमानीय तदधः कृत्वा सप्तभि-र्विभजेत्। लब्धं लिप्ताद्यूर्द्धस्थे द्विगुणे संयोज्य तदर्द्धीकार्य्यम्। एतदेक-कर्म्मसंस्कृते जीवे षड्राश्यूने केन्द्रे ऋणमधिके धनं कार्य्यम्। ततस्त-स्मात् स्फुटात् भूयोऽपि मन्दोच्चमपास्य मन्दकेन्द्रं कार्य्यम्। तस्मादर्कवत्-फलमानीय तदधः कृत्वा सप्तभिर्विभज्य लब्धं लिप्ताद्यूर्द्धस्थे द्विगुणे संयोज्य मन्दफलम्। तत् सकलं करणागते जीवे षड्राश्यूने केन्द्रे ऋणमधिके धनं कार्य्यम्। एवं कृते मन्दस्फुटो जीवो भवति। ततः शीघ्रादपास्य शीघ्रकेन्द्रं कृत्वा तस्मात् प्रथमवत् फलमानीय तत्सकलं मन्दस्फुटे जीवे धनमृणं वा कार्य्यम्। एवं कृते जीवः स्फुटो भवति। अथ जीवशीघ्रभुक्तेरस्याः ५९।८। जीवस्य मध्यमभुक्तिरिमां ५।० संशोध्य शेषं ५४।८ एतत् प्रथमकर्म्मोद्भवगुणकारेण संगुण्य तेनैव भागहारेण विभज्यावाप्तं लिप्तादिफलं भवति। तदर्द्धीकृत्य धनादागतं धनं ऋणादा-गतम् ऋणं कार्य्यम् जीवस्य मध्यमभुक्तावत्र ४।५९। एतद्द्वितीय-कर्म्मोद्भव-गुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं मकरादौ मन्दकेन्द्रे ऋणं कर्कटादे धनं कार्य्यम्। एवं कृते मन्दस्फुटा जीवभुक्तिर्भवति। ततस्तां शीघ्रभुक्तेरस्याः ५९।८ संशोध्य शेषं चतुर्थ-कर्म्मोद्भव-गुणकारेण संगुण्य तेनैव भागहारेण विभज्यावाप्तं लिप्तादिफलं भवति। तद् धनादागतं धनं ऋणादागतं ऋणं कार्य्यं सकलम्। मन्दस्फुटायां जीवभुक्तौ कृत्वा स्फुटा जीवभुक्तिर्भवति। एवं जीवस्फुटो-करणम्। अधुना शीघ्रकेन्द्रांशैः शुक्रस्य फलानयनमाह।

भुक्त्वोदितो जिनैर्दशपश्चान्नन्दाग्निभिर्भृगुसुतोऽष्टिम् ।
त्रिगुणैः सूर्य्यान् त्रिघनेन सप्त धृत्या सपादांशम् ॥१४॥
खमृणं त्वैरर्कैश्चतुरः पादाभ्यधिकान् भवैर्दिशो वक्री ।
सूर्य्यैर्जिनानदृश्य स्त्रिभिरष्टौ प्राक् विलोममतः ॥१५॥

शुक्रकरणम् । इष्टदैवसिकमिष्टकालिकं सितशीघ्रं संस्थाप्य तदनन्तरं द्वितीये स्थाने मध्यमार्कं स्थापयेत् । ततः शीघ्रान् मध्यमसितमपास्य शीघ्रकेन्द्रं भवति ।

तद् भागपिण्डं कार्य्यम् । तस्माद् यदि चतुर्विंशतिर्न शुध्यन्ते तदा विकलं दशभिः संगुण्य चतुर्व्विंशत्या विभज्यावाप्तं धनं भवति । अथ भागपिण्डाच्चतुर्विंशतिः शुध्यन्ते न किञ्चिदवशिष्यते । तदा दशभागाः धनं भवति । अत्र दिने पश्चाद्धे शुक्रोदयो ज्ञेय । एतच्च शीघ्रकेन्द्रे यदा चतुर्विंशतिभागा भवन्ति ।०।२४।०।०।

| | | |
|---|---|---|
| २४ | १० | |
| ३८ | १६ | |
| ३३ | १२ | + |
| २७ | ७ | |
| १८ | १।१५ | |
| १३ | ४।१५ | |
| ११ | १० | − |
| १२ | २४ | |
| ३ | - | |

अथ भागपिण्डात् यदा चतुर्विंशतिः शुध्यन्ते । ततः एकोनचत्वारिंशन्न शुध्यन्ते तदा विकलं षोडशभिः संगुण्य एकोनचत्वारिंशता विभज्यावाप्तं भागादिफलं दशसु संयोज्य फलं धनं भवति । अथ भागपिण्डात् चतुर्विंशतिरेकोनचत्वारिंशच्च शुध्यन्ते । अतःपरं त्रयस्त्रिंशन्न शुध्यन्ते । तदा विकलं द्वादशभिः संगुण्य त्रयस्त्रिंशता विभज्यावाप्तं भागा षड्विंशत्यां संयोज्य फलं धनं भवति । अथ भागादिपिण्डाच्चतुर्विंशतिरेकोनचत्वारिंशत्त्रयस्त्रिंशच्च शुध्यन्ते । अतःपरं सप्तविंशतिर्न शुध्यन्ते तदा विकलं सप्तहतं सप्तविंशत्या विभज्यावाप्तं भागाद्यष्ट-त्रिंशत्सु संयोज्य फलं धनं भवति । अथ भागपिण्डात् चतुर्विंशादि-खण्डचतुष्कं शुध्यते । ततोऽष्टादश न शुध्यन्ते तदा विकलं सपादांशेन हतमष्टादशभिः विभज्यावाप्तं भागादि पञ्चचत्वारिंशता संयोज्य फलं धनं भवति । अथ भागपिण्डात् चतुर्विंशत्यादि पञ्च शुध्यन्ते न किञ्चिदवशिष्यते । तदा षट्चत्वारिंशद्भागाः सपादांशाः परमफलं धनं भवति । एतच्च यदा शीघ्रकेन्द्रे राशिचतुष्कमेकविंशभागाधिकं भवति तदा सम्भवति । ४।२१।०।० एतद् धनकेन्द्रम् । यदा धनकेन्द्रात् शीघ्रकेन्द्रमधिकं भवति तदा तस्मात्

धनकेन्द्रमपास्य शेषं भागपिण्डीकार्य्यम्। ततस्तस्मात् शेषभागपिण्डात् यदा त्रयोदश न शुध्यन्ते तदा विकलं चतुर्भिः सपादैः संगुण्य त्रयोदशभिर्विभज्यावाप्तं भागादिफलमृणं भवति। तत् षट्चत्वारिंशतः सपादायाः संशोध्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् त्रयोदश शुध्यन्ते। अतःपरमेकादश न शुध्यन्ते। तदा विकलं दशभिः संगुण्य एकादशभिर्विभज्यावाप्तं भागादि चतुर्षु सपादेषु संयोज्य फलमृणं भवति। तत् षट्चत्वारिंशतः सपादायाः संशोध्य शेषं फलं धनं स्यात्। अथ शेषभागपिण्डात् त्रयोदशैकादश च शुध्यन्ते, न किञ्चिदवशिष्यते। तदा चतुर्द्दशभागाः सपादाः फलमृणम्। तत् षट्चत्वारिंशतः सपादायाः संशोध्य शेषं धनं फलं भवति। अत्र चाह्नि शुक्रो वक्री ज्ञेयः। एतद् यदा शीघ्रकेन्द्रे राशिपञ्चकं पञ्चदशभागाधिकं भवति तदा सम्भवति ५।१५।०।०। अथ शेषभागपिण्डात् त्रयोदश एकादश च शुध्यन्तेऽतःपरं द्वादश न शुध्यन्ते तदा विकलं चतुर्विंशत्या संगुण्य द्वादशभिर्विभज्याप्तं भागादि चतुर्द्दशसु सपादेषु संयोज्य फलमृणं भवति। तत् षट्चत्वारिंशत्-सपादायाः संशोध्य शेषं फलं धनं भवति। तस्मिंश्चाहनि शुक्रस्य पश्चिमार्द्धेऽस्तमयो ज्ञेयः। एतच्च यदा शीघ्रकेन्द्रे राशिपञ्चकं सप्तविंशतिभागाधिकं भवति तदा सम्भवति ५।२७।०।०। अथ शेषभागपिण्डात् त्रयोदशैकादश द्वादश च शुध्यन्ते। अतःपरं त्रयं न शुध्यन्ते। तदा विकलमष्टाभिः संगुण्य त्रिभिर्विभज्यावाप्तं भागादि अष्टत्रिंशत्सपादायाः संयोज्य फलमृणं भवति। तत् षट्चत्वारिंशतः सपादायाः संशोध्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् त्रयोदशादि त्रीणि खण्डानि शुध्यन्तेऽतःपरं न किञ्चिदवशिष्यते। षट्चत्वारिंशद् भागाः सपादाः परमफलमृणं भवति। तद् धनफलात षट्चत्वारिंशतः सपादायाः संशोध्य न किञ्चिद् भवति। तदा शीघ्रकेन्द्रफलाभावः स्यात्। एतच्च शीघ्रकेन्द्रे राशिषट्कं भवति तदा सम्भवति ६।०।०।०। अथार्द्धचक्रात् शीघ्रकेन्द्रमधिकं भवति। तदार्द्धचक्रमपास्यावशेषं भागपिण्डं कार्य्यम्। तस्मात् भागपिण्डात् त्रयः न शुध्यन्ते तदा विकलमष्टघ्नं त्रिभिर्विभजेत्। लब्धंभागादिफलमृणं भवति। अथार्द्धचक्रोनात् भागपिण्डात् त्रयः शुध्यन्ते न किञ्चिदवशिष्यते। तदाष्टभागादिफलं ऋणं भवति। तत्र च दिने पूर्व्वार्द्धे शुक्रस्योदयो ज्ञेयः। एतच्च शीघ्रकेन्द्रे राशिषट्के

त्रिभागाधिके सम्भवति ६।३।०।०। अथ शेषभागपिण्डात् त्रयः शुध्यन्ते, ततो द्वादश न शुध्यन्ते तदा विकलं चतुर्विंशत्या संगुण्य द्वादशभिः विभज्यावाप्तमष्टसु संयोज्य फलमृणं भवति। अथार्द्धचक्रोनात् भागपिण्डात् त्रयो द्वादश एकादश च शुध्यन्ते। त्रयोदश न शुध्यन्ते तदा विकलं चतुर्भिः सपादैः संगुण्य त्रयोदशभिर्विभज्याप्तं भागादि द्वाचत्वारिंशता संयोज्य फलमृणं भवति। अथार्द्धचक्रोनाद् भागपिण्डात् त्र्यादिखण्डत्रयं शुध्यते न किञ्चिदवशिष्यते तदा षट्चत्वारिंशद्भागाः सपादाः परमफलमृणं भवति। एतच्च शीघ्रकेन्द्रे राशिसप्तकं नवभागाधिकं भवति तदा सम्भवति ७।९।०।० एतद् ऋणकेन्द्रम् तदृणकेन्द्रात् यदा शीघ्रकेन्द्रमधिकं भवति तदा तस्माद् ऋणकेन्द्रमपास्यावशेषं भागपिण्डं कार्य्यम्। तस्माद् भागपिण्डाद् यदाष्टादश न शुध्यन्ते तदा विकलं सपादांशेन संगुण्याष्टादशभिः विभज्यावाप्तं भागादिफलं धनं भवति। तत् षट्चत्वारिंशतः सपादायाः संशोध्य शेषं फलमृणं भवति। अथ शेषभागपिण्डात् अष्टादश शुध्यन्तेऽतःपरं सप्तविंशतिर्न शुध्यन्ते। तदा विकलं सप्तघ्नं सप्तविंशत्या विभज्याप्तं भागादि सपादांशे संयोज्य फलं धनं भवति। तदृणकेन्द्रात् षट्चत्वारिंशतः सपादायाः संशोध्य शेषं फलमृणं भवति। अथ शेषभागपिण्डात् अष्टादश सप्तविंशतिश्च शुध्यन्तेऽतःपरं त्रयस्त्रिंशच्च शुध्यन्ते। तदा विकलं द्वादशभिः संगुण्य त्रयस्त्रिंशता विभज्यावाप्तं भागाद्यष्टसु सपादेषु संयोज्य फलं धनं भवति। तत् षट्चत्वारिंशतः सपादायाः संशोध्य शेषं फलमृणं भवति। अथ शेषभागपिण्डादष्टादशादि-खण्डत्रयं शुध्यते। ततः एकोनचत्वारिंशच्च शुध्यन्ते। तदा विकलं षोडशभिः संगुण्य एकोनचत्वारिंशता विभज्यावाप्तं भागादि सपादविंशत्या संयोज्य फलं धनं भवति। तत् षट्चत्वारिंशतः सपादायाः संशोध्य ऋणं फलं भवति। अथ शेषभागपिण्डात् अष्टादशादि चत्वारि खण्डानि शुध्यन्ते। न किञ्चिदवशिष्यते। तदा षट्त्रिंशद्भागाः सपादाः फलं धनं भवति। तत् षट्चत्वारिंशतः सपादायाः संशोध्य शेषं फलमृणं भवति। तस्मिंश्चाङ्कनि शुक्रस्यास्तमयो शेषैः पूर्वस्याम्। एतच्च शीघ्रकेन्द्रे राश्येकादशकं षड्भागाधिकं भवति। तदा सम्भवति ११।६।०।०। अथ शेषभागपिण्डात् अष्टादशादि चत्वारि खण्डानि शुध्यन्ते। ततश्चतुर्विंशतिर्न शुध्यन्ते तदा विकलं दशभिः संगुण्य

चतुर्विंशत्या विभज्यावाप्तं भागादि षट्त्रिंशत्सपादेषु संयोज्य फलं धनं भवति। ततः षट्चत्वारिंशतः सपादायाः संशोध्य शेषमृणं फलं भवति। अथ शेषभागपिण्डादष्टादशादि पञ्चैव शुध्यन्ते न किञ्चिदवशिष्यते। तदा षट्चत्वारिंशद्भागाः सपादाः परमफलं धनं भवति। तदृणफलात् षट्चत्वारिंशतः सपादायाः संशोध्य न किञ्चिद् भवति। तदा शीघ्रफलाभावः। एतच्च यदा शीघ्रकेन्द्रे राशिद्वादशकं भवति तदा सम्भवति १२।०।०।० एवं च यथासम्भवं भागादिशीघ्रफलमुत्पाद्य तदर्धीकृत्य मध्यमे शुक्रे धनमृणं कार्य्यम्। ततः तस्माद् राशिद्वयमंशकाश्च विंशतिः शुक्रस्य मन्दोच्चं विशोध्य केन्द्रं कार्य्यम्। तस्मादर्कवत् फलमानीय तदर्धीकार्य्यं तदेककर्म्मसंस्कृते शुक्रे षड्राश्यूने मन्दकेन्द्रे ऋणं षड्राश्यधिके धनं कार्य्यम्। तस्माद् भूयोऽपि मन्दोच्चं विशोध्य केन्द्रं कार्य्यम्। तस्मात् भूयोऽपि अर्कवत् फलमानीय तत् सकलं करणागते शुक्रे षड्राश्यूने मन्दकेन्द्रे ऋणमधिके धनं कृत्वा मन्दस्फुटः शुक्रो भवति। ततस्तं शीघ्रकेन्द्रादपास्य शीघ्रकेन्द्रं कार्य्यम्। तस्मात् प्रथमवत् फलमानीय तत्सकलं मन्दस्फुटे शुक्रे धनादागतं धनमृणादागतं ऋणं कृत्वा शुक्रः स्फुटो भवति। अथ सितशीघ्रभुक्तेरस्याः ८६।८ सितमध्यमभुक्तिमिमां ५८।८ संशोध्य शेषं ३७।० एतत् प्रथमकर्म्मोद्भव-गुणकारेण संगुण्य तेनैव भागहारेण विभज्यावाप्तं लिप्तादिफलं तदर्धीकृत्य धनमृणं वा कार्य्यं सितमध्यमभुक्तावस्यां ५८।८। ततो द्वितीयकर्म्मोद्भव-गुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं तदर्धीकृत्य एककर्म्मसंस्कृतायां सितमध्यमभुक्तौ मकरादौ मन्दकेन्द्रे ऋणं कर्कटादौ धनं कृत्वा ततस्तां द्विकर्म्मस्फुटां तृतीयकर्म्मोद्भव-गुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं मकरादौ केन्द्रे ऋणं कर्कटादौ धनं कार्य्यं सितमध्यमभुक्तावस्यां ५८।८। ततस्तां शीघ्रभुक्तेरस्याः ८६।८ संशोध्य चतुर्थकर्म्मोद्भवगुणकारेण संगुण्य तेनैव भागहारेण विभज्यावाप्तं लिप्तादिफलं तत् सकलं मन्दस्फुटायां भुक्तौ धनादागतं धनं ऋणादागतं ऋणं कार्य्यम्। एवं शुक्रभुक्तिः स्फुटा स्यात्। अथ चेदृणादागतमधिकं स्यात् तदा विपरीतशोधनं कृत्वा वक्रा भुक्तिर्भवति। एवं शुक्रस्फुटीकरणम्।

अधुना शनेः शीघ्रकेन्द्रांशैः फलानयनमाह—

विंशत्या द्वौ भुक्त्वा प्रागुदितो रसहुतांशनैस्त्रितयम् ।
त्र्यमैरंशकमेकं नवैस्त्रिभागांशकं स्वमृणम् ॥१६॥

विंशत्यांशत्र्यंशं वक्री सप्तदशभिः शनिर्भागम्
द्वात्रिंशत्या द्वितयं तत्त्वैस्त्रितयं विलोमोऽतः ॥१७॥

शनेः करणम् । इष्टदैवसिकमिष्टकालिकं मध्यमार्कं स्थापयेत् । यस्मात् स एव शनेः शीघ्रम् । ततोऽनन्तरं द्वितीयस्थाने मध्यमं शनिं स्थापयेत् । शनिचारस्य स्थापनं ( यथा पार्श्वे ) । ततः शीघ्रात् मध्यमं शनिं संशोध्य शीघ्रकेन्द्रं भवति । तत् भागपिण्डीकार्य्यम् । तस्मात् भागपिण्डात् विंशतिर्न शुध्यन्ते । तदा विकलं द्वाभ्यां संगुण्य विंशत्या विभज्यावाप्त-भागादिफलं धनं भवति । अथ भागपिण्डात् यदा विंशतिः शुध्यन्ते न किञ्चिदवशिष्यते । तदा भागद्वितयं धनं फलं भवति । तस्मिंश्चाहनि शनिः पूर्व्वार्द्धे उदेति । एतच्च यदा शीघ्रकेन्द्रे विंशतिभागा भवन्ति ०।२०।०।० ।

| | |
|---|---|
| २० | २ |
| ३६ | ३ |
| २० | १ |
| २० | ०।२० |
| २० | ०।२० |
| १७ | १ |
| २२ | २ |
| २५ | ३ |

अथ भागपिण्डात् विंशतिः शुध्यन्ते । अतःपरं षट्त्रिंशन्न शुध्यन्ते । तदा विकलं त्रिभिः संगुण्य षट्त्रिंशता विभज्यावाप्तं भागादि द्वितये संयोज्य फलं धनं भवति । अथ भागपिण्डात् विंशतिः षट्त्रिंशच्च शुध्यन्तेऽतःपरं विंशतिर्न शुध्यन्ते । तदा विकलमेकगुणं विंशत्या विभज्यावाप्तं भागादि पञ्चसु संयोज्य फलं धनं भवति । अथ भागपिण्डात् विंशत्यादीनि त्रीणि शुध्यन्ते । ततो विंशतिर्न शुध्यन्ते । तदा तद्विकलं त्रिभागांशेन संगुण्य विंशत्या विभज्यावाप्तं भागादि षट्सु संयोज्य धनं फलं भवति । अथ भागपिण्डात् विंशत्यादि चत्वारि शुध्यन्ते न किञ्चिदवशिष्यते । तदा षड्भागास्त्रिभागाधिकाः परं फलं धनं भवति । एतच्च शीघ्रकेन्द्रे यदा राशित्रयं षड्भागाधिकं भवति तदा सम्भवति ३।६।०।० । एतद्धनकेन्द्रम् । यदा धनकेन्द्रात् शीघ्रकेन्द्रमधिकं भवति तदा तस्माद् धनकेन्द्रमपास्य शेषं भागपिण्डं कार्य्यम् । तस्माद् भागपिण्डात् विंशतिर्न शुध्यन्ते । तदा

विकलं त्रिभागांशेन संगुण्य विंशत्या विभज्याप्तं भागादिफलमृणं भवति। तद् धनफलात् षड्भ्यस्त्रिभागाधिकेभ्योऽपास्य शेषं फलं धनं भवति। अथ शेषभागपिण्डात् विंशतिः शुध्यन्ते न किञ्चिदवशिष्यते। तदा त्रिभागांशकं फलमृणं भवति। तत्त्रिभागाधिकेभ्यः षड्भागेभ्योऽपास्य शेषं धनं फलं भवति। तस्मिंश्चाहनि शनिर्वक्रीभवति। एतच्च यदा शीघ्रकेन्द्रे राशित्रितयं षड्विंशतिभागाधिकं भवति तदा सम्भवति ३।२६।०।०। अथ शेषभागपिण्डात् विंशतिः शुध्यन्तेऽतःपरं सप्तदश न शुध्यन्ते तदा विकलमेकगुणं सप्तदशभिर्विभज्याप्तं भागादि त्रिभागांशेन संयोज्य फलमृणं भवति। तद् धनफलात् सत्रिभागषड्भागेभ्योऽपास्य शेषं धनं स्यात्। अथ शेषभागपिण्डात् विंशतिः सप्तदश च शुध्यन्तेऽतःपरं द्वाविंशतिर्न शुध्यन्ते। तदा तद्विकलं द्वाभ्यां संगुण्य द्वाविंशत्या विभज्याप्तं भागादि सत्रिभागांशेन संयोज्य फलमृणं भवति। तत् षड्भ्यस्त्रिभागाधिकेभ्योऽपास्य शेषं धनं भवति। अथ शेषभागपिण्डात् विंशत्यादि त्रीणि शुध्यन्ते। पञ्चविंशतिर्न शुध्यन्ते। तदा विकलं त्रिभिः संगुण्य पञ्चविंशत्या विभज्याप्तं भागादि सत्रिभागेषु त्रिषु संयोज्य ऋणं फलं स्यात्। तत् षड्भागेभ्यः सत्रिभागाधिकेभ्यः संशोध्य शेषं धनं फलं स्यात्। अथ शेषभागपिण्डात् विंशत्यादि चत्वार्यपि शुध्यन्ते न किञ्चिदवशिष्यते तदा षट् भागाः सत्रिभागाधिकाः परमफलमृणम्। तदा धनफलं षड्भ्यः सत्रिभागेभ्योऽपास्य न किञ्चिद् भवति। तदा शीघ्रफलाभावः। एतच्च यदा शीघ्रकेन्द्रे राशिषट्कं भवति तदा सम्भवति ६।०।०।०। अथ यदार्धचक्रादधिकं शीघ्रकेन्द्रं भवति तदा तस्मादर्धचक्रमपास्य शेषं भागपिण्डीकार्य्यम्। तस्माद् यदा पञ्चविंशतिर्न शुध्यन्ते तदा विगुणं कृत्वा पञ्चविंशत्या विभज्याप्तमभागादिफलमृणं भवति। अथार्धचक्रोनाद् भागपिण्डात् पञ्चविंशतिः शुध्यन्ते। अतःपरं द्वाविंशतिर्न शुध्यन्ते तदा विकलं द्वाभ्यां संगुण्य द्वाविंशत्या विभज्याप्तं भागादि त्रिषु संयोज्य फलमृणं भवति। अथार्धचक्रोनाद् भागपिण्डात् पञ्चविंशतिर्द्वाविंशतिश्च शुध्यन्तेऽतःपरं सप्तदश न शुध्यन्ते तदा विकलमेकगुणं कृत्वा सप्तदशभिर्विभज्याप्तं भागादि पञ्चसु संयोज्य भागादिफलमृणं स्यात्। अथार्धचक्रोनाद् भागपिण्डात् पञ्चविंशत्यादि-विपरीतानि त्रीण्येव शुध्यन्ते। न किञ्चिदवशिष्यते तदा षड् भागाः फलमृणं भवति। अत्र दिने शनिरनुवक्रो

ज्ञेयः। एतच्च यदा शीघ्रकेन्द्रे राश्यष्टकं चतुर्भागाधिकं भवति तदा सम्भवति ८।४।०।०। अथार्ध-चक्रोनाद् भागपिण्डात् पञ्चविंशत्यादित्रयं शुध्यतेऽतःपरं विंशतिर्न शुध्यन्ते। तदा विकलं त्रिभागांशेन संगुण्य विंशत्या विभज्याप्तं भागादि षट्सु संयोज्य फलमृणं भवति। अथार्ध-चक्रोनाद् भागपिण्डात् पञ्चविंशत्यादि चत्वार्यपि शुध्यन्ते न किञ्चिदवशिष्यते तदा षड्भागाः सत्र्यंशाः परमफलमृणं भवति। एतच्च शीघ्रकेन्द्रे राश्यष्टकं चतुर्विंशति-भागाधिकं भवति तदा सम्भवति ८।२४।०।० एतदृणकेन्द्रम्। ऋणकेन्द्रात् यदा शीघ्रकेन्द्रमधिकं भवति तदा ऋणकेन्द्रमपास्यावशेषं भागपिण्डीकार्यम्। तस्मात् शेषभागपिण्डात् यदा विंशति र्न शुध्यन्ते तदा विकलं त्रिभागांशेन संगुण्य विंशत्या विभज्याप्तं भागादिफलं धनं भवति। तदृणफलात् षड्भ्यः सत्रिभागेभ्योऽपास्यावशेषं फलमृणं भवति। अथ शेषभागपिण्डात् विंशतिश्च शुध्यन्ते ततो द्वितीयविंशतिर्न शुध्यन्ते। तदा विकलमेकगुणं कृत्वा विंशत्या विभज्याप्तं भागादि त्रिभागांशके संयोज्य फलं धनं भवति। तदृणफलात् षड्भ्यः सत्रिभागेभ्योऽपास्य शेषं फलमृणं भवति। अथ शेषभागपिण्डात् विंशतिर्विंशतिश्च शुध्यन्ते। ततः परं षट्त्रिंशच्च शुध्यन्ते। तदा विकलं त्रिगुणं कृत्वा षट्त्रिंशता विभज्याप्तं भागादि सत्रिभागांशके संयोज्य फलं धनं भवति। तदृणफलात् षड्भ्यः सत्रिभागेभ्योऽपास्य शेषं फलमृणं स्यात्। अथ शेषभागपिण्डात् विंशतिर्विंशतिः षट्त्रिंशच्च शुध्यन्ते। न किञ्चिदवशिष्यते। तदा भागचतुष्टयं धनं भवति तदृणफलात् षड्भ्यः सत्रिभागेभ्योऽपास्य शेषं फलमृणं भवति। तस्मिंश्च दिने पश्चिमार्के शनेरस्तमयो ज्ञेयः। एतच्च यदा शीघ्रकेन्द्रे राश्येकादश-दशभागाधिकं भवति तदा सम्भवति ११।१०।०।०। अथ शेषभागपिण्डात् विंशतिर्विंशतिः षट्त्रिंशच्च शुध्यन्ते। अतःपरं विंशतिर्न शुध्यन्ते तदा विकलं द्विगुणं विंशत्या विभज्याप्तं भागादि चतुर्षु सत्रिभागेषु संयोज्य फलं धनं भवति। तदृणफलात् षड्भ्यः सत्रिभागेभ्योऽपास्य शेषमृणं भवति। अथ शेषभाग-पिण्डात् विंशतिर्विंशतिः षट्त्रिंशत् विंशतिश्च शुध्यन्ते। न किञ्चिदवशिष्यते। तदा षड्भागाः सत्र्यंशाः परमं धनफलं भवति। तदृणफलात् षड्भ्यः सत्रिभागेभ्योऽपास्य न किञ्चिद् भवति। तदा शीघ्रफलाभावः। एतच्च शीघ्रकेन्द्रे राशिद्वादशके सम्भवति १२।०।०।०। एवं यथासम्भवं-शीघ्रफल-

मुत्पाद्य तदर्धीकृत्य पृथक्स्थे मध्यमे शनौ धनादागतं धनमृणादागतमृणं कृत्वा। तस्मात् राश्यष्टकं समन्दोच्चं विशोध्य केन्द्रं कार्य्यम्। तस्मादर्कवत् फलमानीय तदधः कृत्वा चतुर्द्दशभिर्विभजेत्। लब्धं लिप्ता ऊर्द्धस्थे संयोज्य चतुर्गुणं कार्य्यम्। तदर्धीकृत्य एककर्म्मसंस्कृते मध्यमे शनौ षड्राश्यूने मन्दकेन्द्रे ऋणमधिके धनं कृत्वा। तस्मात् स्फुटात् भूयोऽपि मन्दोच्चं विशोध्य मन्दकेन्द्रं कार्य्यम्। तस्मात् पुनरर्कवत् फलमानीय तदधः कृत्वा चतुर्द्दशभिर्विभजेत्। लब्धं लिप्तादिफलमूर्ध्वस्थे संयोज्य चतुर्गुणं कार्य्यम्। तत्सकलं करणागते मध्यमे शनौ षड्राश्यूने मन्दकेन्द्रे ऋणमधिके धनं कार्य्यम्। एवं कृते मन्दस्फुटः शनिर्भवति। ततस्तं शीघ्राद् विशोध्य शीघ्रकेन्द्रं कार्य्यम्। तस्मात् प्रथमवत् फलमानीय तत्सकलं मन्दस्फुटे शनौ धनादागतं धनमृणादागतं ऋणं कृत्वा शनिस्फुटो भवति।

अथ शनिशीघ्रभुक्तेरस्याः ५९।८ शनिमध्यम-भुक्तिरिमां २।० विशोध्य शेषम् ५७।८। एतत् प्रथमकर्म्मोद्भव-गुणकारेण संगुण्य तेनैव भागहारेण विभज्यावाप्तं लिप्तादिफलं तदर्धीकृत्य धनादागतं धनमृणादागतमृणं कार्य्यम्। शनि-मध्यमभुक्तावत्र २।०। ततो द्वितीय-कर्म्मोद्भव-गुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं तदधः चतुर्द्दशभिर्विभजेत्। लब्धं लिप्ताद्यूर्द्ध्वे संयोज्य चतुर्गुणं कृत्वा तदर्धीकृत्य एककर्म्मकृतायां शनिभुक्तौ मकरादौ मन्दकेन्द्रे ऋणं कर्क्यादौ धनं कृत्वा ततस्तां द्विःस्फुटां तृतीय-कर्म्मोद्भव-गुणकारेण संगुण्य नवभिः शतैर्विभज्यावाप्तम् लिप्तादिफलं तदधः कृत्वा चतुर्द्दशभिर्विभज्य लब्धं लिप्ताद्यूर्ध्वस्थे संयोज्य चतुर्गुणं कार्य्यम्। तत्सकलम् मकरादौ मन्दकेन्द्रे ऋणम् कर्कटादौ धनम् कार्य्यम्। शनि-मध्यमभुक्तावत्र २।०। एवं कृते मन्दस्फुटा भुक्तिर्भवति। ततस्तां शीघ्रभुक्तेरस्याः ५९।८ संशोध्य चतुर्थ-कर्म्मोद्भव-गुणकारेण संगुण्य तेनैव भागहारेण विभज्यावाप्तं लिप्तादिफलं भवति। तत्सकलं मन्दस्फुटायां भुक्तौ धनादागतं धनमृणादागतमृणं कृत्वा स्फुटाशनिभुक्तिर्भवति। अथ चेदृणाद् धनाधिकं वा स्यात् तद् तस्मात् फलात् मन्दस्फुटां भुक्तिं विशोध्य वक्रभुक्तिः स्यात्। एवं शनेः स्फुटीकरणम्।

अथ भौमस्फुटीकरणोदाहरणम्। तद् यथा—कुरुक्षेत्रे देशान्तरसंस्कृतौ शीघ्रभौमौ।

| शी | म |
|---|---|
| ११ | ० |
| १८ | २३ |
| ११ | १० |
| १८ | ५० |

ततः शीघ्रादस्मात् ११।१८।११।१८ मध्यममिदम् ०।२३।१०।५० संशोध्य जातम् १०।२६।०।२८ ।

अस्मादर्धचक्रमपास्य शेषम् ४।२६।०।२८ एतद् भागपिण्डं कृतम् १४६।०।२८। अस्माद् भागपिण्डाद् उत्क्रमेण सप्त नव षोडश त्रयोदश च शुध्यन्ते। एवं ऋणफलं समग्रं लब्धम् ४०।३०। ऋणं केन्द्रशुद्धशेषमिदम् १०१।०।२८। अस्माद् धनार्द्धखण्डानीमानि त्रीणि १४।३१।३० शुध्यन्ते तस्मात् संशोध्य शेषम् २६।०।२८। अस्माद् द्वात्रिंशत्र शुध्यन्ते। तदा तद्विकलमिदं द्वादशभि-र्भोग्यफलेन गुणितं जातम् ३१२।५।४८ एतद् द्वात्रिंशता भोग्यखण्डेनानेन (३२) विभज्यावाप्तं भागादि फलम् ८।४५।१० एतद्धनसंयोगेऽस्मिन् १७।३० संयोज्य जातं धनफलमिदम् २७।१५।१०। एतदृणफलादस्मात् ४०।३०।० संशोध्य शेषमृणफलमिदम् १३।१४।५०। एतदर्धीकृतं जातम् ६।३७।२५। एतन्मध्यम-भौमेऽस्मिन् ०।२३।१०।५० ऋणं कृत्वा जातम् ०।१६।३३।२५। अस्मान्मन्दोच्च-मिदम् ३।२०।०।० संशोध्य जातं मन्दकेन्द्रमिदम् ८।२६।२३।२५। अस्मादर्कवत् फलमानीतम् १३३।१ एतत् पञ्चगुणं जातम् ६६५।५ तदर्धीकृतं भागादि ५।३२।३२। तुलादित्वादेक-कर्मसंस्कृते भौमेऽस्मिन् ०।१७।३।२५ धनं कृत्वा जातम् ०।२२।३५।३७। अस्माद् भूयोऽपि स्वमन्दोच्चमिदम् ३।२०।०।० अपास्य मन्दकेन्द्रमिदं ८।२।३५।३७ अस्मादर्कवत् फलमानीतम् १३३।८ एतत् पञ्चगुणं जातम् ६६५।४० एतल्लिप्तादि। षष्ट्या भागे हृते जातं भागादिफलं ११।५।४० एतत् सकलं मन्दकेन्द्रस्य तुलादित्वात् करणागते भौमे देशान्तर-संस्कृते मध्यमेऽस्मिन् ०।२३।१०।५० धनं कृत्वा जातोऽयम् १।४।१६।३० एतत् शीघ्रादपास्यास्मात् ११।१८।११।१८ जातं शीघ्रकेन्द्रमिदम् १०।१४।१४।५० अस्मात् पूर्ववत् फलमानीतम्। ऋणादिकत्वाद् ऋणसंज्ञमिदं भागादि १७।२४।२८ एतत् सकलं मन्दस्फुटादस्मात् मध्यम-भौमात् संशोध्य जातः स्फुटो भौमः ०।१६।५२।३। अथ भौमशीघ्रभुक्तेरस्याः ५८।८ मध्यमभुक्तिमिमां ३१।२६ संशोध्य शेषम् २७।२४ एतत् प्रथमकर्णोत्थ-गुणकारेणानेन १२ संगुण्य द्वात्रिंशता विभज्यावाप्तं लिप्तादिफलं ५।११ धनादागतत्वात् धनं कृतं भौममध्यमभुक्तावत्र ३१।२६ जातैककर्णकृता भुक्तिः ३६।३७ एता द्वितीय-कर्णोत्थ-गुणकारेणानेन संगुण्य नवभिः शतैः ९०० विभज्यावाप्तम् लिप्तादि-

फलम् ०।१२ एतत् पञ्चगुणं कृत्वा १।० अर्द्धीकृतम् ०।३० एतन्मन्दकेन्द्रस्य कर्कादित्वादेक-कर्म्मकृतायां भौमभुक्तावत्र ऋणं कृतं जातम् ३१।७ एतां तृतीय-कर्म्मोद्भवगुणकारेणानेन ५ संगुण्य नवभिः शतैर्विभज्याप्तं लिप्तादिफलम् ०।१२ एतत् पञ्चगुणीकृत्य १।० तृतीयमन्दकेन्द्रस्य मकरादित्वात् ऋणं मध्यम-भुक्तावत्र ३१।२६ जाता मन्दस्फुटा भुक्तिः ३०।२६ एतां शीघ्रभुक्तेरस्याः ५८।८ संशोध्य शेषम् २८।४२ एष एव गतगेयः कलाच्छेदाख्यो राशिः अनेनोत्तरत्र प्रयोजनं भविष्यतीति। चतुर्थकर्म्मोद्भव-गुणकारेणानेन १२ संगुण्य तद्भागहारेणानेन ३२ विभज्यावाप्तं लिप्तादिफलं १०।४५। एतद् धनादा-गतत्वात् धनं मन्दस्फुटायां भुक्तावत्र ३०।२६ कृत्वा जाता भुक्तिः ४१।११ एवं भौमस्फुटीकरणम्। शेषाणां बुधादीनां अस्माभिर्व्याकुलत्वात् कर्म्मबहुत्वाच्च नोदाहृतम्। तद्गणकैः पूर्व्वप्रदर्शितविधिना यथासम्भवमुदाहरणीयमिति। अधुना ग्रहाणां मन्दशीघ्रफलविनियोगार्थं शीघ्रकरणं चाह।

शीघ्रफलार्द्धं मध्ये मन्दफलार्द्धं च मन्दशीघ्रफले।
सकले मध्ये स्पष्टः शीघ्रं मध्योनकं केन्द्रम् ॥१८॥

इयमार्य्या प्रतिग्रहस्फुटीकारे प्रदर्शिता। अतएव गतार्था कृतात् त एव पुनरपि क्रियते। अधुना ग्रहभुक्तेरतिदेशार्थं वक्रावक्रोदयास्तगमानां चातीतैष्य-परिज्ञानं चाह।

कार्य्यैवं स्फुटभुक्तिस्तृतीय-मन्दस्फुटोन-शीघ्रगतिः।
गतयेयः कलाच्छेदो दिनानि गतभुक्त-भोग्यानि ॥१९॥

कार्य्या कर्त्तव्या। एवमनेन प्रकारेण कोऽर्थः। यथाग्रहे कर्म्मचतुष्टयम् तथा स्वभुक्तावपि कर्म्मचतुष्टयं कृत्वा स्फुटाभुक्तिर्भविष्यतीत्यर्थः। अतएवा-स्माभिः तेनैव प्रकारेण प्रतिग्रह-स्फुटीकरणं भुक्तेः स्फुटीकरणं प्रदर्शितमिति। तृतीय-मन्दस्फुटोन-शीघ्रगतिरिति। तृतीयकर्म्मणि मन्दात्मकं भुक्तौ स्फुटी-क्रियमाणायां तेन या स्फुटीकृता मध्यमा भुक्तिः सा तृतीया मन्दस्फुटेत्युच्यते। अस्माभिश्च मन्दस्फुटेति व्याख्याता। यतयाजाव (?) शीघ्रगतिः कार्य्या सा गतयेयः कलाच्छेदो भवति। अन्वर्थसंज्ञेयम्। गतानां कलानां छेदः।

शेषाणां कलानाञ्च। अतएवाचार्य्येण गतशेषकलाच्छेद इत्युक्तम्। अनेन यत् कर्म्म विशेषेण व्याख्यायते। तस्माद् भौमादीनां पूर्व्वार्द्धोदयकेन्द्राणि। राशिस्थाने शून्यम्। अष्टाविंशतिर्भागाः भौमस्य। राशिषट्कं पञ्चविंशतिर्भागा बुधस्य। राशिस्थाने शून्यं चतुर्द्दशभागा जीवस्य। राशिषट्कं त्रयो भागाः शुक्रस्य। राशिः शून्यं विंशतिर्भागाः शनैश्चरस्य। अङ्केनाऽपि

| | | | | |
|---|---|---|---|---|
| ० | ६ | | ६ | ० |
| २८ | २५ | १४ | ३ | २० |
| ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० |

एतानि पूर्व्वार्द्धोदयकेन्द्राणि। अथ पश्चिमार्द्धेऽस्तमयकेन्द्राणि। राश्येकादशकं भौमस्य द्विभागाधिकं। राशिपञ्चकं पञ्चभागाधिकं बुधस्य। राश्येकादशकं षोडशभागाधिकं जीवस्य राशिपञ्चकं सप्तविंशतिभागाधिकं शुक्रस्य। राश्येकादशकं दशभागाधिकं शनेः। अङ्केनापि

| | | | | |
|---|---|---|---|---|
| ११ | ५ | ११ | ५ | ११ |
| २ | ५ | १६ | २७ | १० |
| ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० |

एतानि पश्चिमार्द्धेऽस्तमयकेन्द्राणि। अथ बुधशुक्रयोः पश्चिमार्द्धोदयकेन्द्रे राश्येका एकविंशतिभागा बुधस्य। राशिस्थाने शून्यं चतुर्व्विंशतिभागा सितस्य। अङ्केनापि एते पूर्व्वार्द्धेऽस्तमयकेन्द्रे। अथ भौमादीनां वक्रकेन्द्राणि।

| | |
|---|---|
| १ | ० |
| २१ | २४ |
| ० | ० |
| ० | ० |

राशिपञ्चकं चतुर्द्दशभागाधिकं भौमस्य। राशिचतुष्कं षड्विंशतिभागाधिकं बुधस्य। राशिचतुष्कं दशभागाधिकं जीवस्य। राशिपञ्चकं पञ्चदशभागाधिकं शुक्रस्य। राशित्रितयं षड्विंशति-भागाधिकं मन्दस्य अङ्केनापि तद् यथा।

| मं | बु | वृ | शु | श |
|---|---|---|---|---|
| ५ | ४ | ४ | ५ | ३ |
| १४ | २६ | १० | १५ | २६ |
| ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० |

अथ भौमादीनामनुवक्रकेन्द्राणि। राशिषट्कषोडशभागाधिकं भौमस्य। राशिसप्तकं चतुर्भागाधिकं बुधस्य राशिसप्तकं विंशतिभागाधिकं जीवस्य। राशिषट्कं पञ्चदशभागाधिकं शुक्रस्य। राश्यष्टकं चतुर्भागाधिकं मन्दस्य। एतानि अनुवक्रकेन्द्राणि

| मं | बु | बृ | शु | श |
|---|---|---|---|---|
| ६ | ७ | ७ | ६ | ८ |
| १६ | ४ | २० | १५ | ४ |
| ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० |

ग्रहे स्फुटीक्रियमाणे चतुर्थे कर्म्मणि यत् शीघ्रकेन्द्रं तद् यदि उदयकेन्द्रसमं भवति तदा तस्मिंश्चाहनि ग्रहस्योदयो ज्ञेयः। अथास्तमयसमकेन्द्रं भवति चतुर्थे कर्म्मणि तदा तस्मिन्नेव दिने तस्य ग्रहस्यास्तमयो ज्ञेय। अथ स्ववक्र-समं केन्द्रं भवति। तदा तस्मिन् ग्रहो वक्री ज्ञेयः। अथ स्वानुवक्रसमं केन्द्रं भवति तदा तस्मिन् दिने ग्रहोऽनुवक्री ज्ञेयः। अथ चतुर्थकेन्द्रं न्यूनाधिकं भवति वक्रानुवक्रोदयास्तमयानाम् अन्यतमस्मात् केन्द्रध्रुवात् तदा तस्य चतुर्थकर्म्मकेन्द्रस्य चान्तरं कार्य्यम्। तल्लिप्तापिण्डं कृत्वा गतयेयाख्येन छेदेन विभजेत्। लब्धं दिवसादिकालः। तदा चतुर्थे केन्द्रध्रुवकेऽधिके सति तावता कालेन भविष्यति। तदा ध्रुवक-केन्द्राच्चतुर्थकेन्द्रमधिकं भवति तावत् कालोऽतीतस्य गतः। वक्रानुवक्रोदयास्तमयानामन्यतमस्य यस्य सम्बन्धिना सह केन्द्रेण चतुर्थकेन्द्रान्तरं कृतं तस्येत्यर्थः। एवं यावदुदयास्तमयौ विहितौ तौ स्फुटौ न भवतः। कुत एव तत्। उत्तरत्रानयोः पुनर्विधानसामर्थ्यात् यौ वक्रानुवक्रौ अभिहितौ स्फुटावुत्तरत्र विधिना भावादिति। अथोदाहरणम्। तद् यथा। भौमस्यान्वेषणं च। भौमे स्फुटीक्रियमाणे चतुर्थकर्म्मणि शीघ्रकेन्द्रमिदम् १०।१४।५१।१३। अस्तमयमपि केन्द्रमिदं ११।२।०।०। अनयो-रन्तरम् ०।१७।८।४७ एतल्लिप्तापिण्डं कृतं जातं १०२८ ४७ भौमस्य भुक्तौ स्फुटी-क्रियमाणायां तृतीय-कर्म्मणि मन्दफलमिदम् १।०। एतन्मन्दकेन्द्रस्य तृतीयपद-त्वात् धनं कृतं मध्यमभुक्तावत्र ३१।२६ जाता तृतीय-मन्दस्फुटा भुक्तिः ३२।२६ एतां शीघ्रकेन्द्रभुक्तेरस्याः ५८।८ संशोध्य जातो गतयेयः कलाविच्छेदो भवति। अनेन केन्द्रान्तर-लिप्तापिण्डान्तरमिदं १०२८।४७ विभज्यावाप्तो दिवसादिकालः ३८।३१।५२। अत्रास्तमयकेन्द्रादस्मात् चतुर्थशीघ्रकेन्द्रमिदम् १०।१४।५१।१३ एवं गतास्तावता कालेनास्तमयो भविष्यतीति। एवं सर्व्वेष्वपि वक्रानुवक्रास्तमयोदयादिषु गणकैरुदाहरणीयमिति।

इति श्रीभट्टमधुसूदन-सुत-चतुर्व्वेद-पृथूदक-स्वामिकृते खण्डखाद्य-विवरणे स्फुटगत्यधिकारो द्वितीयः।

## अथ त्रिप्रश्नाध्यायः

क्षीरोदधौ शयानस्य लक्ष्म्या सह सुरप्रभोः ।
पादपद्मनिषण्णस्तु त्रिः प्रश्नान् विवृणोम्यहम् ॥

अथातस्त्रिप्रश्नाध्यायो व्याख्यायते। के त्रयः प्रश्नाः ? लग्नप्रश्नः, छायाप्रश्नः, तृतीयः कालप्रश्नश्च। लग्नप्रश्न इष्टघटिकादेरित्यादि। छायाप्रश्नः क्रान्त्यंशैरूनमित्यादि। कालप्रश्नः दिनदलकर्म इत्यादि। तत्रादावेवार्य्यात्रितयं चरदलकर्मण्याह ।

नव तिथयोऽष्टिविभक्ताः पञ्च रसा वसुहृता दशत्रिहृताः ।
विषुवच्छायागुणिताः स्वदेशजाश्चरदलविनाड्यः ॥१॥
चरदलविनाडिकागति-कलावधात् खखरसाग्निलब्धकलाः ।
कृष्णमुदयेऽस्तमये धनमुत्तरगोलेऽन्यथा याम्ये ॥२॥
पञ्चदश हीनयुक्ताश्चरार्द्धनाडीभिरुत्तरे गोले
याम्ये युक्तविहीना द्विसंगुणा रात्रिदिननाड्यः ॥३॥

एतदार्य्यात्रयं तिथिनक्षत्राध्याये व्याख्यातम्। अधुना निरक्षदेशेनाह ।

लङ्कोदया विनाड्यो वसुभानि छिद्रनवयमास्त्रिरदाः ।

अत्र लङ्कोदयलक्षणार्थम्। अन्यत्राथ लङ्कादेशे च स्वा एव स्वोदयाः। तद् यथा। वसुभानि। शतद्वयमष्टसप्तत्यधिकमित्यर्थः: २७८। एते लङ्कायां मेषोदयखण्डकाः। छिद्र-नवयमाः एकोनशतत्रयमित्यर्थः: २९९। एते लङ्कायां वृषोदयखण्डकाः। त्रिरदाः शतत्रयं त्रयोविंशत्यधिकमित्यर्थः: ३२३। एते लङ्कायाः मिथुनस्योदय-खण्डकाः। य एव मिथुनस्य त एव कुलीरस्य। य एव वृषस्य त एव सिंहस्य। य एव मेषस्य त एव कन्यायाः। एवं मेषमिथुनानां पुनरपि क्रमेण यथासंख्यं तुलावृश्चिक-

धनुषाम्। पुनरप्युत्क्रमेण मिथुनवृषमेषोदयाः यथासंख्यं मकरकुम्भ-मीनानामिति। अथ तैर्निरक्षोदयैर्यथा स्वोदयाः क्रियन्ते। तथा चाह—

खचरार्द्धोना व्यस्ता व्यस्तयुताः स्वोदय-विनाड्यः ॥४॥

अनन्तरोक्त-लङ्कोदयास्ते स्थापयित्वा। खचरार्द्धखण्डैरूनाः कर्त्तव्याः। मेषोदयः स्वदेशचरखण्डेनोनः कर्त्तव्यः। वृषोदयः स्वदेशवृषचरखण्डेनोनः कार्य्यः। मिथुनोदयः स्वदेशमिथुनचरखण्डेनोनः कर्त्तव्यः। एवं कृते यथाक्रमेण मेषवृषमिथुनानां स्वोदया भवन्ति। यस्मादुक्तं खचरार्द्धोना भवन्ति। व्यस्ता व्यस्तयुता इत्यत्रोच्यते। त एव लङ्कोदया मेषवृष-मिथुनानां व्यस्ताः स्थाप्या विपरीता इत्यर्थः। त एव विपरीताः सन्तः व्यस्तयुताः कार्य्याः। विपरीतयुता इत्यर्थः। एतदुक्तं भवति मिथुनवृष-मेष-लङ्कोदयाः स्थाप्याः। स्वदेशमिथुनवृषमेषचरखण्डैर्युताः कार्य्याः। यथा मिथुनलङ्कोदयो मिथुनचरखण्डेन युतः कार्य्यः। स कर्कटस्वोदयो भवति। वृषस्वोदयो वृषचरखण्डेन युतः कार्य्यः। स सिंहस्वोदयो भवति। मेषचरखण्डेन लङ्कोदयो मेषस्य युतः सः कन्यास्वोदयो भवति। एवं मेष-वृष-मिथुन-कर्कट-सिंह-कन्यानां स्वोदयाः सिद्धाः स्युः। एवं य एव कन्यायाः स एव तुलस्य, य एव सिंहस्य स एव वृश्चिकस्य। य एव कर्कटस्य स एव धनुषः। य एव मिथुनस्य स एव मकरस्य। य एव वृषस्य स एव घटस्य। य एव मेषस्य स एव मीनयुगस्येति। तथा चोक्तं ब्राह्मे तृतीयाध्याये—

खचराभिरूनयुक्तां क्रमेण क्रमोत्क्रमन्यासः।
उदयप्राणा व्यस्तास्यार्कं तात्कालिकं कृत्वा ॥१७॥

अथोदाहरणम्। समाङ्गुलविषुवच्छायादेशे चरार्द्धखण्डानि ६८।५७।२३ एतैर्लङ्कोदया ऊनीकृता यथाक्रमेण जाताः २०८।२४२।३००। एतैरेवोत्-क्रमेण लङ्कोदयाः युताः ३४६।३५६।३४७ समाङ्गुल-विषुवच्छाये देशे स्वोदयाः। एत एव विपर्य्ययेण तुलादीनां षण्णां स्वोदयाः स्युः।

अधुना लग्नानयनमाह।

इष्टघटिकाभिरुदयैरनुपाताद् वर्द्धितो रविर्लग्नम्।

इष्टघटिका स्वघटिका उच्यन्ते। ताभिरिष्टघटिकाभि त्रैराशिकेन आगतेन वर्द्धितो रविः स एव लग्नं भवतीति वाक्यार्थः।

अत्र करणम्। यदा घटिकानां कर्त्ता लग्नं कर्त्तुमिच्छति तदा ताभिर्घटिकाभिरूनाधिकाभिरर्को मध्यमस्तात्कालिकः कार्यः। देशान्तरं कृत्वा स्फुटोकार्यः। तस्माच्च स्फुटार्कोदयभुक्तभागान् संगृह्य लिप्तापिण्डं कारयेत्। तल्लिप्तापिण्डं यत्र राश्यावादित्यो व्यवस्थितस्तत्प्रमाणस्वोदयचषकैः संगुण्याष्टादशशतैर्विभज्यावाप्तं चषकादि फलं तद् भुक्तसंज्ञं भवति। तत इष्टघटिकाश्च चषकीकृत्य तस्मात् चषकपिण्डात् अभुक्तसंज्ञाश्चषकाः संशोध्य अभुक्तभागा आदित्ये क्षेप्याः। एवं कृते निरंशसंज्ञो सूर्यो भवति। तत्पूर्व्वाक्रान्तराशेः विना यावन्तो राश्युदयाः इष्टघटिकाः चषकपिण्डमध्यात् शुध्यन्ते तावन्तः शोध्याः। आदित्ये निरंशे तावन्तो राशयः क्षेप्याः। यो राशिर्न शुध्यति स भागहारः। तेन भागहारेण त्रिंशद्गुणिताः शेषचषकाः विभाज्याः। अवाप्तं भागादिफलं निरंशके सूर्य्ये संयोज्य इष्टघटिकानां लग्नं भवति। अभुक्तसंज्ञाश्चषका इष्टघटिका च चषकेभ्यो न शुध्यन्ते तदा यत्र राशावर्को व्यवस्थितः स एव राशिर्भागहारः। तेनेष्टघटिकाः चषकाः त्रिंशद्गुणा विभज्याप्तं भागादिफलं तात्कालिकेऽर्के प्रक्षिप्य तात्कालिकं लग्नं भवति। अथ रात्रिशेषे कश्चिल्लग्नं कर्त्तुमिच्छति तदा इष्टघटिकाभिः अर्कः कर्त्तव्यः। तस्मादुक्ता भागा ग्राह्याः, लिप्तापिण्डो-कृत्यादित्याक्रान्त-राश्युदयेन संगुण्याष्टादशशतैर्विभज्यावाप्तं चषकाः भुक्तसंज्ञा भवन्ति। तत इष्टघटिकाश्च चषकीकृत्य ताभ्यो भुक्तसंज्ञाश्चषकाः संशोध्याः। भुक्तभागा आदित्ये संशोधनीयाः। एवं कृतेऽर्को निरंशसंज्ञो भवति। भुक्तचषकैः शुद्धैरिष्टघटिकासम्बन्धिनां चषकाणां मध्यात् आदित्याक्रान्त-राशेर्विना वैपरीत्येन यावन्तो राशयः शुध्यन्ते तावन्तः शोध्याः। तेभ्यो यावन्तो राशयः शुद्धास्तावन्तो राशयोऽर्के संशोधनीयाः। ये च न शुध्यन्ते तेभ्यः चषकेभ्यः स राशिर्भाजकः। तेन भाजकेन शुद्धमिष्टचषकाः त्रिंशता संगुण्य विभज्यावाप्तं भागादिफलं भवति। तेन भागफलेन निरंशोऽर्कः ऊनीकृत्य इष्टघटिकानां रात्रिशेषे लग्नं भवति। अत्रोदाहरणं पञ्चानां घटिकानां लग्नं क्रियते। ततः तात्कालिकोऽर्को देशान्तरसंस्कृतः स्फुटः ११।१८।४६।२६ अस्माद्भुक्तभागाः ०।१०।१३।२४। एते लिप्तापिण्डो-कृत्वादित्याक्रान्त-राश्युदयेनानेन २०८ संगुण्याष्टादशशतैर्विभज्यावाप्तम्। चषकादिफलं अभुक्तसंज्ञं चेदं ७१ तत इष्टघटिकाश्चषकीकृत्य सा चेयम् ३००।

एतेभ्यः चषकेभ्योऽभुक्तचषकान् संशोध्य शिष्टाः २२८। ततः पूर्वस्थापिताभुक्तभागान् संक्षिप्यार्को निरंशसंज्ञो जातः ०।०।०।० अभुक्तशुद्धशिष्टचषकाः एते २२८। एभ्यो मेषस्योदयमिदम् २०८ संशोध्य शेषम् २०। आदित्ये राशिं दत्त्वा जातोऽर्कः १।०।०।० । ततोऽवशिष्टादस्मात् २० वृषप्रमाणं न शुध्यते। तस्मात् २०। स एव राश्युदयो भाजकः तेन भाजकेन शुद्धशिष्टचषकास्त्रिंशद्गुणा विभज्यावाप्तं भागाः २। शेषं षष्ट्या संगुण्य तेनैव छेदेन विभज्यावाप्तं लिप्ताः २८। पुनः शेषं षष्ट्या संगुण्य तेनैव छेदेन विलिप्ताः ४५। एतद् भागादिफलं निरंशेऽर्के प्रक्षिप्य जातं लग्नम् १।२।२८।४५।

अथ राशिशेषस्योदाहरणम्। तत्र प्रश्नघटिकास्तिस्रः ।३। एताभिरर्कस्फुटस्तात्कालिकः कृतो जातः ११।१८।३८।३८ अस्माद् भुक्तभागाः १८।३८।३८ एते लिप्तापिण्डीकृता जाताः ११७८।३८ एते स्वदेशमीनोदयेनानेन २०८ संगुण्याष्टादशशतैर्विभज्यावाप्तं चषकादिभुक्तसंज्ञम्। तच्छेदम् १३७ तत इष्टघटिकास्तिस्रः ३। चषकीकृत्य जातम् १८०। एतेभ्यो चषकेभ्यो भुक्तसंज्ञाः चषकाः संशोध्य शेषं ४३ तात्कालिकादर्कादपि भुक्तभागाः संशोध्य जातं निरंशसंज्ञमिदम् ११।०।०।० एतस्मात् कुम्भोदयप्रमाणं न शुध्यते। कुम्भोदयप्रमाणमिदं २४२। तस्मात् कुम्भोदयो भाजकः। अनेन भाजकेन त्रिंशद्गुणान् शेषचषकान् विभज्यावाप्तं भागाः ५ शेषं षष्ट्या संगुण्य तेनैव छेदेन लिप्ताः १८। तथैव विलिप्ताः ५०। एवं भागादिफलम् ५।१८।५० एतत् निरंशकात् संशोध्य रात्रिशेषे इष्टघटिकानां त्रयाणां लग्नं जातम् १०।२४।४०।१०। तथा चोक्तं शास्त्रे—

> रविणाभुक्तराशेः कलागुणान् स्वोदयासुभिर्भक्तान्।
> राशिकलाभिर्लब्धं प्रश्नस्तेभ्योऽशकाः शोध्याः॥
> प्रक्षिप्य राश्युपभुक्तं शेषासुभ्यः क्रमेण यावन्तः।
> शुध्यन्त्युदयाः सूर्ये तावन्तो राशयः क्षेप्याः॥
> शेषास्त्रिंशद्-गुणितास्ततोऽविशुद्धोदयासुभिर्विभजेत्।
> लब्धं भागादि रवौ प्रक्षिप्य तथाकृते लग्नम्॥ इति।

अथ रात्रिगते काले लग्नं क्रियते। तदा तात्कालिकोऽर्कः षड्राश्यूनः कार्यः। शेषदिनलग्नवत् रात्रिगते व्याख्यातं पूर्वम्। पुच्छकस्य लग्नस्य राशेर्गतस्य भुक्तं भागाद्यं यत् तल्लिप्तापिण्डीकृतमेकान्ते स्थापयेत्। तच्च

कार्म्मभूमौ नवशतैर्भागमपहृत्य भुक्ता होरा लभ्यन्ते। तस्यैव षड्भिः शतैः भागे हृते भुक्ता द्रेक्काणा लभ्यन्ते। तस्यैव शतद्वयेन भागे हृते भुक्तनवांशो लभ्यते। तस्यैव सार्द्धशतेन भुक्तो द्वादशांशो लभ्यते। तस्यैव षष्ट्या भागे हृते भुक्तत्रिंशांशो लभ्यते इति। एवं लग्नस्य होराद्रेक्काणादि-षष्ट्यांशार्थी-करणम्। एतच्च जातकयात्रासूपयोग्यमिति।

अधुना लग्नात् तात्कालिककालानयनमाह—

अनुपात-वर्द्धितेऽर्के लग्नसमे स्वोदयैर्घटिकाः ॥५॥

अनुपातेन त्रैराशिकेनार्को लग्नसमः करणीयः। अर्काच्च लग्नसमात् कालो ज्ञायते। तात्कालिकादर्कादभुक्तसंज्ञाश्चषकाः प्राग्वत् कर्त्तव्याः। लग्नाच्च भुक्तचषकाः ततोऽभुक्तभुक्तचषका एकीकृत्य आदित्य-लग्नयोरन्तरराश्युदयैः युक्ताः कर्त्तव्याः। अर्के च तावन्तो राशयो भुक्तभोग्यैः सह क्षेप्याः। लग्नसमोऽर्को भवति। ततो लग्नचषकाणां षष्ट्या भागमपहृत्य प्रश्नघटिका भवन्ति। तस्मिन् काले लग्नमिति। अथ एकस्मिन् राशौ लग्नार्कौ भवतः तदा तयोरन्तरं कार्य्यम्। तल्लिप्तापिण्डी-कृत्य अर्काक्रान्तराश्युदयेन संगुण्याष्टादशशतैर्विभज्यावाप्तं फलं प्रश्नचषकाः भवन्ति। अथ लग्नकालिकोऽर्को न ज्ञायते केवलमर्द्धरात्रिको ज्ञायते। तदा कालानयनं कथ्यते। प्राग्वल्लग्नार्कयोरन्तरालः कालः साध्यः। तेन कालेनार्कस्तात्कालिकः कार्य्यः। तस्यार्कस्य लग्नस्यारात् पुनरपि कालः साध्यः। पुनरप्यर्कस्तात्कालिकः कर्त्तव्यः। तस्यार्कलग्नस्य चान्तरकालः साध्यः। एवं भूयोभूयस्तावत् कार्य्यं यावत्कालोऽविशेषः। स अर्कस्य लग्नकालो भवति।

अथोदाहरणम्। तद् यथा। इष्टकालिकौ लग्नार्कौ कृतौ लिख्यते। इमौ—

| लग्न | अर्क |
|---|---|
| १ | ११ |
| २ | १८ |
| २८ | ४६ |
| ३० | ३७ |

अर्कादभुक्तचषकाः ७१ लग्नाच्च भुक्तचषकाः २० एते एकीकृत्य जाताः ९१।

सान्तरोदयाश्च ३०० एतेषां षष्ट्या भागे हृते ५ एतस्मिन् काले लग्नं जातम्। एवं सर्व्वत्रोदाहरणीयमिति। यदार्कादधिकं लग्नं भवति तदैवम्। यथोनं तदा रात्रिशेषे इति। यदा रात्रिशेषे जातं लग्नं तदा वैपरीत्येनार्कभुक्तेन लग्नादभुक्तेन कालेनान्तरोदयकालो भवत्यर्केऽप्यन्तरोदयभुक्तसहितं शोध्य-लग्नसमोऽर्को भवति। तथा च ब्राह्मे

रविराश्यभुक्तलिप्ता उदयगुणिता हृता गृहकलाभिः।
लब्धं प्राणाः स्थाप्याः प्रक्षिप्यार्कं गृहाभुक्तम्॥
तावत् सूर्य्ये राशीन् क्षिपेत् समो लग्नराशिभिर्यावत्
क्षिप्तगृहाणां प्राणान् प्रक्षिप्य स्थापितेऽष्वसुषु॥
तदपि सविकलोदयवधं राशिकलाभिर्भजेत् फलप्राणान्।
प्रक्षिप्य प्राणेषु प्राणाः सूर्य्योदयादसकृत्॥
रात्रिशेषे च
कृत्वैवमून रकवत् लग्नसमं प्राग् भवेत् कालः॥

अधुना ज्याकरणे ज्याखण्डमाह—

त्रिंशत्-सनवरसेन्दु-जिनतिथिविषया गृहार्द्धचापानाम्।
अर्द्धज्याखण्डानि ज्याभुक्तैक्यं सभोग्यफलम्॥६॥

इयमार्य्या तिथि-नक्षत्राध्याये व्याख्याता।

अथ क्रान्ति-करणमाह—

क्रान्तिकला द्विरसगुणास्त्रिखमुनयो द्विखदिशो वसुव्यर्काः।
वसुवसुविश्वे खकृतमनवः स्वक्षेपयुत-वियुताः॥७॥

इयमार्य्या व्यतिपाते व्याख्याता। अथेष्टदिने मध्याह्नच्छाया-नयनमाह—

क्रान्त्यंशैरूनयुतं स्वाक्षमनष्टं विशोध्य नवतेर्ज्या।
छेदोऽनष्टज्यायाः सूर्य्यगुणाया दिनार्द्धे भा॥३८॥

क्रान्तेरंशाः क्रान्त्यंशाः तैः क्रान्त्यंशैः ऊनयुतं स्वाक्षं स्वदेशाक्षमक्षं स्वाक्षं मेषादूनं तुलादधिकं तदनष्टसंज्ञं भवति। तच्च विशोध्य नवतेः विश्लेषाद्

इत्यर्थः शेषस्य ज्या छेदो भवति। कस्या उच्यते अग्रष्टज्यायाः। त्रिज्याभूतायाः सूर्यगुणायाः। भव्यं दिनार्द्धभा दिनार्द्धं मध्याह्ने या भाच्छाया भवतीत्यर्थः।

अत्र करणम्। अभीष्टदिने मध्यमार्कं माध्याह्निकं कृत्वा स्फुटीकार्य्यम्। तस्मिन् हिरसगुणाद्यैः क्रान्तिखण्डकैः क्रान्तिं कृत्वा स्वदेशाक्षं सदा दक्षिणं तयोर्भेदाद्यर्कं वर्त्तमाने अन्तरं तुलादौ योगं कार्य्यम्। एवं कृते यद् भवति तदग्रष्टसंज्ञं भवति। तद्दैवसिकं नतांशाख्यं भवतीत्यर्थः। तद्भागान् नवतेः विशोध्य यदवशिष्यते तस्य त्रिंशत्-मनवादिभिर्जीवाः कार्य्याः। स छेदो भवति। तथा उच्यते। अग्रष्टसंज्ञस्य त्रिंशत् सनवादिभिः जीवा सा द्वादशहता छेदेन विभज्यावाप्तं फलमङ्गुलादि तत्र अभीष्टदेशे मध्याह्ने छाया भवति। यदा यत्रोत्तरा क्रान्तिः स्वाक्षसमा शोध्यमाना भवति तदा तस्मिन् दिने नष्टच्छायो मध्याह्नः। यद्युत्तराक्रान्ति स्वाक्षादधिका भवति तदा मध्याह्ने छाया दक्षिणाभिमुखी भवति। एतदप्युज्जयिन्याः दक्षिणे देशे सम्भवति। यस्माच्चतुर्विंशत्यंशेभ्यः ऊनोऽक्षः उज्जयिन्याः दक्षिणदेशेष्विति।

उदाहरणम्। मध्याह्नकालिकः स्फुटोऽर्कः ११।१८।५३।२४ अस्मात् क्रान्ति-दक्षिणा २४२।२४। समाङ्गुल-विषुवद्देशे स्वाक्षः १८१२ तुलादित्वात् क्रान्तियुतं जातं २०४५।२८ एतदग्रष्टसंज्ञम्। एतद् नवतिभागकलाभ्यः ५४०० संशोध्य जातं ३३४५।३२, अस्य ज्या १२३।१२ एष छेदसंज्ञः। ततोऽग्रष्टज्या ८३।४५, एषा द्वादशभिः संगुणिता अङ्गुलादिलब्धम् १००५। छेदेन अनेन १२३।१२ विभज्यावाप्तमङ्गुलादिका जाता दिनार्द्धच्छाया ८।११। एवमन्य त्राप्युदाहरणीयम्। अभीष्टदिने दिनदलकर्णानयनमाह—

**क्रान्त्यक्षांशैक्यान्तरहीनविशद्दज्यया हृता त्रिज्या।**
**द्वादशभिः सङ्गुणिताङ्गुलादि-लब्धं द्युदलकर्णः ॥८॥**

क्रान्तेरक्षांशानां च ऐक्यान्तरं क्रान्त्यक्षांशैक्यान्तरम्। तेन हीनं विशद्दं राशित्रयमित्यर्थः। तस्माच्च तज्ज्या। हृता का सा त्रिज्या सार्द्धशतमित्यर्थः १५०। त्रिभूता द्वादशभिः संगुणिता अङ्गुलादि-द्युदलकर्णो भवतीत्यर्थः। वाक्यार्थः।

करणम्। माध्याह्निकात् स्फुटार्कात् क्रान्तिः कर्त्तव्या। तस्याः स्वदेशाक्षेण सह एकदिग्योगो भिन्नदिग्वियोगः कार्य्यः। तद्योगमन्तरं वा भागनवतेः संशोध्य अवशेषस्य त्रिंशत्-सनवेति ज्या जाता १२३।१२ अस्य ज्या छेदो नाम। कस्य उच्यते। त्रिज्यायाः द्वादशगुणायाः। अष्टादशशतानामित्यर्थः। लब्धं फलमङ्गुलाद्यभीष्टदिने मध्याह्ने कर्णो भवति। शङ्कुशच्छायाग्रयोरन्तरे सूत्रं कर्णशब्देनोच्यते। अत्रोदाहरणम्। तद् यथा। माध्याह्निकादर्कात् क्रान्तिर्दक्षिणा २४२।२४ स्वदेशाक्षश्च १८१२।४ अनयोरेकदिक्त्वात् योगः कृतः २०५४।२८। एतेन हीनं त्रिराशम् ३१४५।३१। अस्य ज्या १२३।१२ एष छेदसंज्ञः। द्वादशगुणिता त्रिज्या १८०० छेदेन विभज्याप्तम् १४।३५ एष मध्याह्नकर्णोऽस्मिन् अहनि इति। अत्रापि यद्युत्तरा क्रान्तिः ऊनाधिका भवति तदा विपरीतशोधनं कृत्वा दक्षिणाभिमुखी छाया भवति। एतदप्युज्जयिन्या दक्षिणेन सम्भवति इति। अधुना कर्णज्ञानच्छायानयनच्छायाज्ञानस्य कर्णात् ज्ञानमाह—

कर्णच्छायाकृत्योः शङ्कुकृतिविहीनयुक्तयोर्मूले।
छायाकर्णौ द्युदलं नतहीनदिवसगतशेषम्॥१०॥

वाक्यार्थः। कर्णकृतिश्च छायाकृतिश्च कर्णच्छायाकृती। तयोः कर्णच्छायाकृत्योः। यथासंख्यं शङ्कुकृत्या विहीनयुक्तयोर्मूले। मूलं मूलं च मूले। ते यथासंख्यं छायाकर्णौ भवतः। इति वाक्यार्थः। करणम्—यदा कर्णात् छाया क्रियते तदा कर्णवर्गात् शङ्कुवर्गम् इति। शङ्कुः द्वादशाङ्गुलः तस्य वर्गः चतुश्चत्वारिंशदधिकं शतम् १४४। एषः कर्णवर्गात् विशोध्य मूलं सा छाया भवति। अथ छायातः कर्णः क्रियते तदा छायावर्गे शङ्कुवर्गं संयोज्य यद् भवति तस्य मूलं कर्णः स्यात्।

अथ उदाहरणम्। तद् यथा। इष्टकर्णः १४।३५ अस्य वर्गो गोमूत्रिकया जातः २१२।४८ अस्मात् शङ्कुकृतिम् १४४ इमाम् विशोध्य शेषम् ६८।४८। अस्य मूलम् ८।१८, एषा तस्मिन् काले छाया इयम् ८।१८ अस्याः कृतिः ६८।४८, अस्याः शङ्कुकृतिरिमाम् १४४ संयोज्य मूलम् १४।३५। एष कर्णस्तस्मिन् काले ज्ञेयः। अथ नतं व्याख्यायते। दिनार्द्धाद् इष्टकालगतं शेषं वाऽपास्य यदवशिष्टं तन्नतसंज्ञं भवति। एतदुक्तं भवति। मध्यात् पूर्वमपरेण वा

यः कालः स नतसंज्ञो भवति। एवमन्येषां चन्द्रादीनामपि स्वकीयमध्याह्नात् पूर्व्वेणापरेण वा यः कालः तस्य नतसंज्ञो भवति। वक्ष्यति च शृङ्गोन्नतौ। सूर्य्यवत् छायेति। यत्र चन्द्रमध्याह्ने छायाकर्णानयनमभिहितम्। न चाक्षं ज्ञायते। तस्मात् लम्बाक्षयोरानयनमाह—

विषुवत्कर्णविभक्ते शङ्कुच्छायाहते पृथक् त्रिज्ये।
लम्बाक्षज्ये चापं विषुवज्ज्यायाः स्वदेशाक्षः ॥११॥

विषुवतः कर्णो विषुवत्कर्णः। तेन विषुवत्कर्णेन विभक्ते कृते। पृथक् त्रिज्ये किम्भूते शङ्कुच्छायाहते। यथासंख्ये फले लम्बाक्षज्ये भवतः। विषुवज्ज्यायाश्चापं च ततः स्वदेशाक्षो भवति। इत्यार्य्यार्थकरणम्। त्रिज्या सार्द्धशतं द्वादशशङ्कुः तेन गुणिता अष्टादशशतानि भवन्ति। विषुवत्कर्णेन विभज्याप्तं लम्बज्या भवति। तथा त्रिज्या स्वदेश-विषुवच्छायया संगुण्य विषुवत् कर्णेन विभज्यावाप्तमक्षज्या लभ्यते। ततो विषुवज्ज्यायाश्चापं कार्य्यम्। तत् स्वदेशाक्षा भवन्ति। लम्बज्यायाश्चापं न कुत्रचिदुपयुज्यते। सा तत्रैव लम्बज्याकर्ण-शृङ्गोन्नत्यादिषु क्रियते। विषुवच्छाया च समायामवनौ द्वादशाङ्गुलशङ्कुं निधाय विषुवद्दिने सममध्यगते रवौ ग्राह्या। सा तस्मिन् दिने विषुवच्छाया भवति। तस्याः कर्णो विषुवत्कर्णः। अत्रोदाहरणं प्रकटार्थत्वान्न दर्शितमिति। अधुना चापकरणमाह—

ज्याखण्डोने शेषे गुणिते नवभिः शतैरशुद्धहृते।
क्षेप्याणि शुद्धखण्डैर्गुणितानि शतानि नव चापम् ॥१२॥

इयमार्य्या व्यतीपातकरणे व्याख्याता।

अधुनेष्टछायाकरणमाह—

त्रिज्या चरार्द्धजीवायुतहीनाऽन्त्या नतोत्क्रमज्योना।
छेदोऽन्त्याया दिनदलकर्णगुणायाः फलं कर्णः ॥१३॥

त्रिज्या सार्द्धं शतं १५० सा चरार्द्धजीवया युतहीना मेषादावर्के युता तुलादौ हीनाऽन्त्या भवति। सा चान्त्या नतोत्क्रमज्यया ऊना छेदो भवति। कस्य उच्यते। अन्त्यायाः किम्भूतायाः दिनार्द्धकर्णगुणायाः फलं तदिष्टकालकर्णो भवति। इति वाक्यार्थः।

करणम्। इष्टदिने चरदलस्य जीवा कार्य्या। अत्र कालाज्जीवा क्रियते तत्र कालं प्राणीकृत्य यथाचलिताभ्यस्तथा काले प्राणेभ्यः त्रिंशत्-सनवेति जीवा कार्य्या। तया त्रिज्या मेषादावर्के वर्त्तमाने युता तुलादिगे हीनाऽन्त्या भवति। सा चानष्टा नतोत्क्रमज्योना यत्र कालेऽभीष्टे छाया क्रियते। स कालो दिनार्द्धादपास्य यदवशिष्यते। तन्नतसंज्ञं भवति। तस्य त्रिंशत्-सनवाद्यैर्ज्याखण्डैर्विपरीतजीवा कार्य्या। तद् यथा। प्रथमे राश्यर्द्धे पञ्च द्वितीये पञ्चदश तृतीये चतुर्विंशतिः चतुर्थे एकत्रिंशत् पञ्चमे षट्त्रिंशत् षष्ठे एकोनचत्वारिंशत् इति अङ्केनापि लिख्यते।

ज्याभुक्तैक्यसभोग्यफलमिति पूर्व्ववत् कर्त्तव्यम्। तत्काले जीवा क्रियमाने घटीपञ्चदशकस्य त्रिज्या भवति। नतकालो यदा पञ्चदशघटिकाभ्योऽधिको भवति तदा नतकालात् पञ्चदशघटिका अपास्य क्रमज्यां कृत्वा त्रिज्यायुतां कृत्वा अन्त्या ऊना कार्य्या। एवमुत्क्रमोज्योनाऽन्त्या छेदो भवति। कस्य उच्यते। अन्त्यायाः दिनदलकर्णगुणायाः। यदावाप्तं फलं तदङ्गुलादि अभीष्टकालस्य छाया कर्णो भवति। तस्मात् कर्णच्छायाकृत्योरिति छाया कार्य्या। सा च प्रश्नकाले तात्कालिकस्य शङ्कोः छाया भवतीति। अन्यत्रापि यत्र कुत्रचित् नतज्या क्रियते। सा नतोत्क्रमेणैव कार्य्येति। तदा चरार्द्धमिदं ०।२३ एतत् प्राणीकृतं १३८ अस्य ज्या ५।५८ अनया तुलादित्वादर्के त्रिज्या हीना त्वाज्या जाता १४४ एषाऽन्त्या। घटिकानां पञ्चानां छाया क्रियते। तदा पञ्चघटिका दिनार्द्धादस्माद् १४।४६ अपास्य शेषम् ८।४६ एतन्नतसंज्ञम्। अस्मात् उत्क्रमज्या ०।१५ अनया ऊना त्रिज्या १५० जाता ७८।४५ एष छेदसंज्ञः। अन्त्या च दिनदलकर्णगुणा जाता २१०२।३८ एतां छेदेन विभज्यावाप्तं २८।३० एष कर्णः तस्मिन् काले। तत्कर्णच्छायाकृत्योरिति छायाकृता जाता २५।५१। एषा छाया पञ्चानां घटिकानां तस्मिन् दिने इति। नतच्छाया कृता।

| |
|---|
| ५ |
| १५ |
| २४ |
| ३१ |
| ३६ |
| ३८ |

अधुना छायया नतानयनमाह—

पूर्व्वापरयोर्दिनगतशेषस्य चरार्द्धहीनयुतस्य ।
क्रमजीवा चरदलजीवया युतोनाऽथवा छेदः ॥१४॥

पूर्व्वापरयोर्दिनगतयोः यथासंख्यं दिनगतशेषस्य किम्भूतस्य चरार्द्धहीन-युतस्य मेषाद्यर्के हीनस्य तुलाद्यर्के युतस्य क्रमेण जीवा क्रमजीवा चरदल-जीवया युतोना मेषाद्यर्के युता तुलादिगे ऊना । अथवानेन प्रकारेण छेदः क्रियते । अथवा शब्दोऽत्र प्रकारान्तराय । तेन विकल्पो नताद्यः कृतच्छेद-स्तेन सदृशो भवतीति वाक्यार्थः ।

करणम् । पूर्व्वाह्णे दिनगतस्यापराह्णे शेषस्य कालः समच्छाया भवति । तावत् प्रमाणस्य नित्यमेव यावत् घटिकानां शेषाणां वा ताभ्यो घटिकाभ्यश्चर-दलघटिका अपास्य शेषं प्राणीकृत्य क्रमेण ज्या कार्य्या त्रिंशत्-सनवेति । सा चरदलजीवया मेषादावर्के वर्त्तमाने युता तुलादौ हीना छेदो भवति । छेदेन पूर्व्ववत् कर्म्माण्यत्रापि । उन्नतज्याक्रमेणैव कार्य्या । यदा चरार्द्धं न शुध्यति दिनस्य गतात् शेषाद् वा तदा विपरीतशोधनं कृत्वा क्रमात् ज्या कार्य्या । तयोर्युता चरदलजीवा छेदो भवति । छेदेनाप्त्या दिनदलकर्णगुणा विभज्येष्टकर्ण इति । तस्याः कर्णच्छायाकृत्योः इति छाया कार्य्येति ।

अत्रोदाहरणम् । पूर्व्वाह्णे गता घटिका ५ । गतकालश्चरार्द्धयुतो जातः ५।१२ अस्मात् क्रमज्या ७८।४५ चरदलजीवया ५।५८ तुलादित्वात् ऊनो-कृत्य जाता ७३।४६ एषः छेदः पूर्व्वागतेन सदृशः । शेषं पूर्व्ववत् कालच्छायेयम् । दिनार्द्धात् पूर्व्वापरेण छायाकालः छाया कृता ।

अधुना छायातः कालानयनमाह—

दिनदलकर्णगुणान्त्या छायाकर्णोद्धृता फलोनान्त्या ।
शेषस्योत्क्रमजीवा धनुर्दिनार्द्धान्नतप्राणाः ॥१५॥

दिनस्य दलकर्णो दिनदलकर्णः । तेन दिनदलकर्णेन गुणा दिनदलकर्ण-गुणा । का सा ? अन्त्या । पूर्व्वापरेण वा नतकालस्य प्राणा भवन्ति । इत्यार्य्यार्थः ।

करणम्। इष्टदिने मध्याह्नकर्णः कर्त्तव्यः। तेन गुणा अन्त्या तात्कालिकच्छायाकर्णेन। कर्णच्छायाहृत्योरिति यः कर्णः कृतः तेन विभजेत्। यल्लब्धं फलं तेन फलेनोनान्त्या प्रागानीता यदवशिष्यते तस्योत्क्रमज्याया धनुः कार्य्यः। तेन दिनार्द्धानत-प्राणा भवन्ति पूर्व्वापरेण वा। यदा फलेनान्त्या त्रिज्यातोऽधिका भवति तदा तस्याः त्रिज्यामपास्य शेषस्य क्रमजीवाभिश्चापं कृत्वा तत्त्रिज्याचापे चतुःपञ्चाशच्छतेषु ५४०० संयोज्य तेन दिनार्द्धानतप्राणा भवन्ति। यदि नतगते काले छाया गृहीता तदा तद्दिनार्द्धात् पूर्व्वेण। अथ दिनशेषे तदापरेण। अथ यदेतद् व्याख्यातं पञ्चदशेभ्यो घटिकाभ्योऽधिकं नतं क्रमज्यया संयुतं क्रियते। तथान्त्या त्रिज्याभ्योऽधिका भवति तदा क्रमधनुषायुतमुत्क्रमधनुः क्रियते। एतन् मयाभिहितं क्रियते न्यायसिद्धत्वादन्यथाकालविसंवादो स्यात्। तथा चोक्तं ब्राह्मे—

उत्क्रमजीवाभ्यधिकं क्रमज्यासंयुतं धनुर्धनुषा इति।

(त्रिप्रश्न, ४६।)

अथोदाहरणम्। तद् यथा। दिनदलकर्णः १४।२६। अनेनान्त्येयं १४४ संगुणिता जाता २१०२।३८। तात्कालिक-छायाकर्णः २८।१०। अनेन विभज्यावाप्तं फलम् ७३।४६ अनेनोनान्त्या जाता ७०।१५ अस्याः उत्क्रमज्याभिः शोध्य चापमिदं ३४६३ एते दिनार्द्धात् पूर्व्वेण नतप्राणाः। एतेषां षष्ठ्या षड्भिर्भागे हृते घटिकाः ९।३७। एता दिनार्द्धादस्मात् १४।३७ विशोध्य घटिका ५। एवमन्यत्रापि उदाहरणीयम्। छायातो नतकालः कृतोऽन्यच्छाययैवोन्नतकालानयनमाह—

**चरदलजीवोनाधिकफलक्रमज्याधनुश्चरार्द्धेन।**
**युतहीनं पूर्व्वाह्णे दिवसगतं शेषमपराह्णे ॥१६॥**

वाक्यार्थः। चरदलजीवया ऊनाधिकं चरदलजीवोनाधिकम्। किं तदुच्यते। फलम्। मेषादावूनं तुलाद्ये धनम्। तस्य क्रमज्याभिश्चापं चरार्द्धेन युतहीनम्। मेषाद्ये युतं तुलादिगे हीनं पूर्व्वाह्णे दिवसगतं भवति। शेषमपराह्णे भवतीति वाक्यार्थः।

कारणम्। इष्टदिने चरदलस्य जीवा कार्य्या तयोनाधिकं प्रागार्य्याभिहितं यत्फलसंज्ञम्। कदोनं कदाधिकं भवति ? भण्यते। मेषादिस्थेऽर्के ऊनं तुलादिस्थेऽधिकम्। एवमूनाधिकस्य क्रमज्याभिचापं कार्य्यम्। चरार्द्धेन प्राणोक्तेन मेषादावर्के युतं तुलादिगे हीनम् एवं कृते यद् भवति तस्य षड्भिर्भागमपहृत्य विनाड्यः भवन्ति। चषकाणां षष्ट्या भागे हृते पूर्व्वाह्णे गतघटिकाः स्युः। अपराह्णे शेषा इति। अस्योदाहरणम्। यथा चरदल जीवेयम् ५।५८ अनया फलमिदम् ७१।४६ तुलादित्वादधिकं कृतं जातम् ९८।४५ अस्य क्रमज्याभिचापमिदं १८३८ एतच्चरार्द्धप्राणैरमीभि. ११३८ तुलादित्वादूनं कृतं जातम् १८००। अस्य षड्भिर्भागमपहृत्य लब्धं चषकाः ३००। षष्ट्या भागे हृते घटिका ५ एषः कालो दिवसस्य गतः। अथ चेदपराह्णस्य तदा शेष इति। एवमन्यत्राप्युदाहरणीयमिति।

इति भट्टमधुसूदनसुत-चतुर्व्वेदपृथूदकस्वामिकृते
खण्डखाद्यविवरणे त्रिप्रश्नाध्यायस्तृतीयः।

## अथ चन्द्रग्रहणाध्यायः

प्रणम्याहं सुरश्रेष्ठाः (?) पादानमरपूजितान् ।
चन्द्रग्रहे प्रवक्ष्यामि भाष्यं बुद्धिकरं महत् ॥

अथातो चन्द्रग्रहणाध्यायो व्याख्यायते। बाहुल्येन पर्व्वस्नानार्थं सकालं स्नानमिष्यते शिष्टैः तस्य च पर्व्वणां दर्शनं नास्ति। अन्येषामपि तिथि-नक्षत्र-करणानां तथा तेषां शशिभास्करग्रहयोरव्यभिचारित्वात्। शशिभास्करग्रहणयो-र्दृग्गणितैक्यं लोकः पश्यति। तस्मात्तिथ्यादिष्वप्यर्थेषु दैवज्ञवाक्यं लोके भाद्रियते। अतो ग्रहणं वक्ष्यामि।

ते चतुर्द्दशभेदभिन्नाः। के ते चतुर्द्दशभेदाः? उच्यन्ते यथा—

दिग्वर्णवलनवेला-निमीलनोन्मीलन-स्थितिविमर्दाः।
अर्धच्छायामोक्ष-ग्रासेष्टग्रास-परिलेखाः ॥*

इत्यार्य्या। तत्रादावेव समलिप्तीकरणमाह—

रविचन्द्रौ समलिप्तौ तिथिगतगम्यघटिकाफलोनयुतौ।

तत्र तावत् पौर्णमास्यां चन्द्रार्कौ अर्द्धरात्रिकौ स्फुटौ कर्त्तव्यौ। राहुश्च अस्तमतिकालारहितः सम्प्रदायविच्छेदः। ततश्चन्द्रार्काभ्यां सकाशात् तिथ्यन्तमुत्पाद्य गताद् गम्याच्च ततो रविचन्द्रौ समलिप्ताविति रविश्च चन्द्रश्च तौ। समलिप्तौ कथ्यन्ते भण्यन्ते। तिथिगत-घटिकाभिर्गम्य-घटिकाभिर्वा रविचन्द्रभुक्ती मध्यमं संगुण्य षष्ट्या विभज्यावाप्तम्। स्वफले। ताभ्यां स्वफलाभ्यामर्द्धरात्रिकौ मध्यमौ तिथ्यन्ते ज्ञेयौ। यदाऽर्द्धरात्रात् पूर्व्वेण तिथ्यन्तस्तदा स्वफलेनोनौ तिथ्यन्ते भवतः। अथार्द्धरात्रादपरेण तिथ्यन्तं तदा स्वफलेनाधिकौ तिथ्यन्तकालिकौ भवतः। ततः स्फुटौ कार्य्यौ। पुनरपि तिथ्यन्तमेवमसकृत् कार्य्यं यावत् तिथ्यन्तं स्थिरं भवति। तौ च तस्मिन् काले समलिप्तौ भवतः। किञ्चिदूनाधिकौ षड्राश्यन्तराविति।

* ब्राह्मस्फुटसिद्धान्ते चतुर्थाध्यायस्य द्वितीयः श्लोकोऽयम्।

अथोदाहरणम्। शाकेऽस्मिन् ५८७ मासा एव १० तिथयः १५। अस्मिन् दिनेऽर्कचन्द्रौ देशान्तर-संस्कृतौ स्फुटौ जातौ

| र | च |
|---|---|
| १० | ४ |
| ६ | ६ |
| २४ | ४३ |
| ४४ | १० |

आभ्यां सकाशात् अर्द्धरात्रादूर्द्धेन तिथिघटिका १।३० एतैः रविशशि-चन्द्रोच्चभुक्तयो मध्यमा उच्यन्ते।

| | | |
|---|---|---|
| ५९ | ७९० | ६ |
| ८ | ३४ | ४० |

संगुण्य षष्ट्या विभज्यावाप्तानि फलानि यथाक्रमेण

| | | |
|---|---|---|
| १ | १९ | ० |
| २८ | ४६ | १० |

एभिश्च फलै-रूनीकृताः तिथ्यन्ते जाताः मध्यमा रविशशिचन्द्रोच्चा यथाक्रमेणैव। अङ्केनापि

| | | |
|---|---|---|
| १० | ४ | ३ |
| ४ | ६ | २९ |
| ४८ | ५८ | २७ |
| ४६ | ३६ | ३२ |

अस्मिन्नेव काले रविचन्द्रौ स्फुटौ राहु-सहितौ

| रवि | चन्द्र | राहु |
|---|---|---|
| १० | ४ | ४ |
| ६ | ६ | १० |
| २३ | २३ | १ |
| २४ | २४ | २४ |

एतौ समलिप्तौ जातौ षड्राश्यन्तरितौ। एवमन्यत्राप्युदाहरणीयमिति। अर्कास्तमयादनन्तररात्रौ प्रविष्टास्तिथिघटिका १५।२४। एतस्मिन्नेव काले मध्यग्रहणम्। एतेनान्तरोक्ता मध्यग्रहणिका रविचन्द्रराहव इति।

अथ विक्षेपानयनमाह—

पातोनचन्द्रजीवा विक्षेपो नवगुणेषुहृता ॥१॥

एतदार्य्यार्द्धं नक्षत्राध्याये प्रसङ्गेन व्याख्यातम्। अधुना रविचन्द्रयोर्मानानयनमाह—

**भवदशगुणिते रविशशिगती नखैः खरजिनैर्हृते माने।**

एतदार्य्यार्द्धं व्यतीपातकरणे तिथिनक्षत्राध्याये व्याख्यातम्। अधुना राहोर्मानानयनमाह—

**तत्त्वाष्टगुणितभुक्त्योः षष्ट्या हृतमन्तरं तमसः ॥२॥**

रविशशिभुक्त्योर्यथासंख्यं तत्त्वाष्टगुणितयोर्यदन्तरं तत् षष्ट्या विभज्य राहुमानं भवतीति वाक्यार्थः।

करणम्। रविभुक्तिस्तत्त्वैः संगुण्य पञ्चविंशतिभिरित्यर्थः। शशिभुक्तिश्चाष्टभिः। ततस्तयोरन्तरं षष्ट्या विभज्यावाप्तं लिप्तादि राहुमानं लभ्यते।

उदाहरणम्। रविभुक्तिः ६१ एषा तत्त्वैर्गुणिता जाता १५२५ चन्द्रस्फुट भुक्तिरियं ७२३ अष्टगुणा जाता ५७८४ अनयोरन्तरम् ४२६३। एतत् षष्ट्या विभज्यावाप्तम् ७१।३ एतद् राहुमानमिति। अधुना ग्रहस्य भावाभावज्ञानमाह—

**विक्षेपं संशोध्य प्रमाणयोगार्द्धतस्तमश्छन्नम्।**

प्रमाणं प्रमाणं च प्रमाणे। तयोर्योगः। तस्यार्द्धं प्रमाणयोगार्द्धं तस्मात् प्रमाणयोगार्द्धतः। संशोध्य किं तत् भणति। विक्षेपम्। यदवशिष्टं तत्तमसः छन्नं भवति। मध्यमग्रहणे। करणम्। चन्द्रग्रहणे चन्द्रो ग्राह्यः। राहुर्ग्राहकः। सूर्य्यग्रहणे सूर्य्यो ग्राह्यः चन्द्रो ग्राहकः। ग्राह्यग्राहकयोर्योगं कृत्वा तदर्द्धं कार्य्यम्। तस्मात् मध्यमग्रहणिकं विक्षेपं संशोध्य यदवशिष्यते तावन्मात्रो मध्यग्रहणिको ग्रासो भवति। यदा मध्यमग्रहणिकविक्षेपं प्रमाणयोगार्द्धान्न शुध्यन्ते तदा ग्रहणिकाभावः। इति।

उदाहरणम्। तद् यथा। ग्राह्यमानम् २८।१७ ग्राहकमानम् ७१।३ अनयोर्योगः १००।२० अस्यार्द्धम् ५०।१०। तस्मात् मध्यग्रहणिकविक्षेपमिदं १७।० संशोध्य शेषम् ३३।१०। एतावन्तो मध्यग्रहणे ग्रासलिप्ताः। अथ सर्व्वग्रहणखण्डग्रहणयोः परिज्ञानमाह—

**सर्व्वग्रहणं ग्राह्यादधिके खण्डग्रहणमूने ॥३॥**

मानैक्यार्द्धाद् विक्षेपं संशोध्य यदवशिष्यते तद् यदि ग्राह्यमानाधिकं भवति तदा सर्व्वग्रहणम्। अथ न तदा खण्डग्रहणम्।

अथोदाहरणम्। मानैक्यार्द्धाद् विक्षेपं संशोध्य शेषम् ३३।१०। एतत् ग्राह्यमानादस्मात् २८।१७ अधिकमतएव सर्व्वग्रहणमिति।

अधुना स्थित्यर्द्धमर्दार्द्धयोरानयनमाह—

छाद्यार्द्धेन छादकदलस्य युक्तोनकस्य वर्गाभ्याम्।
विक्षेपकृतिं प्रोह्य पदे तिथिवत् स्थितिविमार्दार्द्धे ॥४॥

छाद्यस्यार्द्धम् छाद्यार्द्धं तेन युक्तोनकस्य। कस्येत्युच्यते। छादकदलस्य। यथासंख्यं वर्गाभ्यां विक्षेपकृतिं प्रोह्य। पृथक् पृथक् शेषस्य पदे। पदं च पदं च पदे। ते द्वे तिथिवत् क्रियते। यथासंख्यं स्थित्यर्द्धविमर्दार्द्धे भवतः। इति वाक्यार्थः।

करणम्। छादकदलं द्विस्थं स्थाप्य एकस्मिन् प्रदेशे छाद्यार्द्धेन युतं कर्त्तव्यम्। अन्यस्मिन् छाद्यार्द्धेनोनम्। तस्य छाद्यार्द्धेन युक्तोनकस्य पृथक् पृथक् कृते कृती। ताभ्याम् विक्षेपकृतिमपास्य मूले षष्टिघ्ने भुक्त्यन्तरेण विभज्यावाप्ते फले यथासंख्यं स्थित्यर्द्धविमर्द्दार्धे भवतः।

अथोदाहरणम्। छादकदलमिदम् ३५।३१ अस्मिन् छाद्यार्द्धमिदम् १४।३८। दत्त्वा जातम् ५०।१०। अस्य कृतिरियम् २५१६।४०। अस्य विक्षेपकृतेरियम् २८८। संशोध्य जातम् २२२७।४०। अस्य मूलम् ४७।११। एतत् षष्ट्या संगुण्य भुक्त्यन्तरेण विभज्यावाप्तं घटिकादिफलम् ४।१६। एतत् स्थित्यर्द्धम्। अथ विमर्द्दार्धोदाहरणम्। छादकदलमिदम् ३५।३२ अस्मात् छाद्यार्द्धमिदम् १४।३८। संशोध्य जातम् २०।५४। अस्य कृतिः ४३६। अस्मात् विक्षेपकृतिमिमां २८८ संशोध्य जातम् १४७। अस्य मूलम् १२।७ एतत् षष्ट्या संगुण्य भुक्त्यन्तरेण विभज्यावाप्तं घटिकादिफलं १।५। एतत् विमर्द्दार्द्धम्। अधुना स्थित्यर्द्धविमर्द्दार्द्धयोः स्फुटीकरणमाह—

भुक्तिः षष्टिहृता स्थितिविमर्ददलनाड़िकागुणार्केन्द्वोः।
आद्यान्तयमन्ते धनमसकृत् तेनान्यथा याते ॥५॥

भुक्तिः षष्ट्या हृता षष्टिहृता स्थितिविमर्ददलनाड़िकागुणा च पृथक् पृथक्स्थयोः रवेरिन्द्वोरवाप्तफलं आद्यार्धं प्रग्रहे उन्मिलनार्धः। अन्ते धनं

मोक्षे धनमित्यर्थः। एवं विमर्द्धार्द्धागतेन फलेन आदावृणं कृते निमीलनकालो भवतीत्यर्थः। अन्ते धनं कृतेनोन्मीलनकालो भवतीत्यर्थः। एवमसकृत् कृत्वैवं स्थित्यर्द्धविमर्द्धार्द्धे कर्त्तव्ये। अन्यथा पात इति। राहोर्विपरीतं चन्द्रार्काभ्यां धनर्णमिति।

करणम्। अत्रार्कग्रहणमादित्यग्रहणार्थम्। अतएव चन्द्रराह्वोर्भुक्ती स्थित्यर्द्धनाड़िकाभिः संगुण्य षष्ट्या विभज्याप्तफले। ततः समलिप्तश्चन्द्रमाः स्वफलेनोनः कार्य्यः। मध्यग्रहणिको राहुः स्वफलेनाधिकः कर्त्तव्यः। ततस्ताभ्यां चन्द्रराहुभ्यां विक्षेपं कृत्वा तस्य कृतिर्मानैक्यार्द्धकृतेर्विशोध्य शेषस्य मूलं षष्टिघ्नं भुक्त्यन्तरेण विभज्यावाप्तं प्रग्रहणस्थित्यर्द्धं भवति। ततः स्थित्यर्द्धेन भूयोऽपि चन्द्रराह्वोर्भुक्तिं संगुण्य षष्ट्या विभज्यावाप्तेन समलिप्तचन्द्रमा ऊनः कार्य्यः। राहुराधिकः कार्य्यः। भूयोऽपि ताभ्यां विक्षेपात् पुनः स्थित्यर्द्धम्। तेन स्थित्यर्द्धेन पुनरपि चन्द्रराहू तात्कालिकौ कर्त्तव्यौ। एवं भूयोभूयः तावत् कार्य्यं यावत् प्रग्रहणस्थित्यर्द्धं स्थिरं भवति। तौ च चन्द्रराहू प्रग्रहणकालिकौ स्फुटौ भवतः। अथ मोक्षः। प्रथमेन स्वफलेन चन्द्रमा अधिकः कार्य्यः राहुश्चोनः कार्य्यः। ततस्ताभ्यां चन्द्रराहुभ्यां विक्षेपः। तस्य कृतिं मानैक्यार्द्धकृतेः संशोध्य यदवशिष्यते तत् षष्टिघ्नं भुक्त्यन्तरेण विभज्यावाप्तं मोक्षस्थित्यर्द्धं भवति। तेन स्थित्यर्द्धेन चन्द्रराहुभुक्ती संगुण्य षष्ट्या विभज्यावाप्तेन फलेन समलिप्तश्चन्द्रमा अधिकः कार्य्यः राहुश्चोनः कार्य्यः। ततस्ताभ्यां चन्द्रराहुभ्यां प्राग्वत् विक्षेपः स्थित्यर्द्धं च। एवं भूयोभूयः स्थित्यर्द्धं तावत् कार्य्यं यावन्मोक्ष-स्थित्यर्द्धं स्थिरं भवति। तौ च मोक्ष-कालिकौ स्फुटौ भवतः। अथ निमीलनं। चन्द्रराह्वोर्भुक्ती निमीलन-मर्द्दार्द्धेन संगुण्य षष्ट्या विभज्यावाप्ते स्वफले भवतः। तेन स्वफलेन समलिप्तश्चन्द्रमा ऊनः कार्य्यः। ततस्ताभ्यां विक्षेपः। तस्य कृतिं मानान्तरार्द्धकृतेः संशोध्य यदवशिष्यते तस्य मूलं षष्टिघ्नं भुक्त्यन्तरेण विभज्यावाप्तं फलं निमीलनमर्द्दार्द्धं भवति। तेन मर्द्दार्द्धेन समलिप्तिकौ चन्द्रराहू तात्कालिकौ कार्य्यौ। ततस्ताभ्यां विक्षेपः। तेन पुनरपि विमर्द्दार्द्धम्। एवं तावत् कार्य्यं यावन् निमीलनमर्द्दार्द्धं स्थिरं भवति। तौ च निमीलनकालिकौ भवतः। अथोन्मीलनविमर्द्दार्द्धात् स्वफलेन चन्द्रश्चाधिकः राहुश्चोनः ताभ्यां विक्षेपः तस्य कृतिर्मानान्तरार्द्धकृतेः

ंशोध्य शेषस्य मूलं षष्टिघ्नं भुक्त्यन्तरेण विभज्याबाप्तं फलं उन्मीलन-त्रिमर्द्धार्द्धं भवति। तेन भूयोऽपि चन्द्रराहू तात्कालिकौ कृत्वा ताभ्यां विक्षेपः। तेन विमर्द्धार्द्धम्। एवं भूयोभूयस्तावत् कार्य्यं यावदुन्मीलनमर्द्धार्द्धं स्थिरं भवति। तौ च उन्मीलनकालिका स्फुटौ भवतः।

यथोदाहरणम्। तद् यथा। चन्द्रराहोर्भुक्ती ७२३।३०। एते स्थित्यर्द्धेन मध्यमेनानेन ४।१६ संगुण्य षष्ट्या विभज्याबाप्ते फले ५१।२६॥ ०।१०। ततः समलिप्ताच्चन्द्रात् स्वफलं विशोध्य राहोर्दत्त्वा प्रग्रहणकालिकौ जातौ ४।५३।३१॥ ४।१०।१७॥ आभ्यां विक्षेपः २१।२ अस्य कृतिः ४४०।२४ मानैक्यार्द्धकृतेरस्याः २५१६।४० संशोध्य शेषं २०७६।१६ अस्य मूलमिदं ४५।३२ एतत् षष्ट्या संगुण्य भुक्त्यन्तरेणावाप्तं घटिकादिफलं तच्चेदम्। ४।६। पुनरप्यनेन स्थित्यर्द्धेन समलिप्तिकौ कृतौ जाताविमौ। ४।५।३३।५८॥ ४।१०।१।३७ आभ्यां विक्षेपः २०।५३। अस्य कृतिः ४३५।२०। मानैक्यार्द्ध-कृतेरस्याः २५१६।४० संशोध्य शेषं २०८१।२० अस्य मूलमिदं ४५।३८ एतत् षष्ट्या संगुण्य भुक्त्यन्तरेण विभज्यावाप्तं घटिकादिफलं ४।७ एतद्द्वितीये कर्म्मणि स्थित्यर्द्धम् अनेन चन्द्रराहू तात्कालिकौ जाताविमौ ४।५।३।३।६॥ ४।१०।१।३७ आभ्यां विक्षेपः २०।२५।२ अस्य कृतिः ४३५।२५ मानैक्यार्द्ध-कृतेरस्याः २५१६।४० संशोध्य शेषं २०८१।१५ अस्य मूलं ४५।३५ एतत् षष्ट्या संगुण्य भुक्त्यन्तरेण विभज्यावाप्तं घटिकादिफलं ४।७ एतत् प्रग्रहणिकं स्फुटं स्थित्यर्द्धम्। तच्चेदम् ४।२३।* (?) मोक्षकालिकौ चन्द्रराहू ४।८।१६। १५॥ ४।१०।१।११ एवं निमीलन-मर्द्धार्द्धमसकृत् करणेन स्थिरीभूतम्। तच्चेदं ०।५८ निमीलन-कालिकौ चन्द्रराहू ४।६।११।४०॥ ४।१०।११।२७। अथ उन्मीलनमर्द्धार्द्धमसकृत् करणेन स्थिरीभूतं तच्चेदम् १।३२ उन्मीलन-कालिकौ चन्द्रराहू ४।६।३८।०॥ ४।१०।१।१२॥ अथैतयोः स्थित्यर्द्ध-विमर्द्धार्द्धयोः स्फुटीकृतयोः विनियोगो ब्रह्मगुप्तेन कृतः। तस्मात् व्याख्यायते। पौर्ण-मास्यन्तं पञ्चसु प्रदेशेषु संस्थाप्य एकस्मात् प्रग्रहणिक-स्थित्यर्द्धं विशोध्य प्रग्रहणकालो भवति। अन्यस्मिन् उन्मीलन-मर्द्धार्द्धं दत्त्वा उन्मीलनकालो भवति। अन्यस्मिन् निमीलनमर्द्धार्द्धं विशोध्य निमीलनकालो भवति। अन्यस्मिन्नुन्मीलनमर्द्धार्द्धं दत्त्वा उन्मीलनकालो भवति। यच्च पौर्णमास्यन्तं स

*एतन्मौक्षिकस्थित्यर्द्धम्।

मध्यग्रहणकालः। प्रग्रहणमोक्षकालयोर्यदन्तरं स स्थितिकालः। तावत्-कालं ग्राह्यमण्डले ग्राहकस्यावस्थानमित्यर्थः। निमीलनोन्मीलनयोर्यदन्तरं स विमर्दकालः। तावत्-कालं ग्राह्यमण्डलमदृश्यं भवतीत्यर्थः। प्रग्रहणिक-स्फुटस्थित्यर्द्धं ४।७ निमीलन-विमर्द्दार्द्धं ०।५८ उन्मीलन-विमर्द्दार्द्धं १।२२ मोक्षस्थित्यर्द्धं स्फुटम् ४।२३ एभिर्यथोक्तन्यायेन पौर्णमास्यन्तरमस्तमनादूर्द्ध-मेतत् १५।२४ संस्कृतं जातं प्रग्रहणनिमीलनमध्योन्मीलन-मोक्षकम् ११।१७॥ १३।२६॥ १५।२४॥ १६।४६॥ १८।४७॥ तथा चोक्तं ब्राह्मे—

स्फुटतिथ्यन्ते मध्यं प्रग्रहणं स्थितिदलोनकेऽभ्यधिके।
मोक्षो निमीलनोन्मीलने विमर्द्दार्द्धहोनयुते ॥१५॥

अधुना इष्टग्रासानयनमाह।

**वीष्टस्थितिदलविक्षेपलिप्तिकावर्गयुतिपदेनोनम्।**
**मानैक्यार्द्धं छन्नं मध्ये विक्षेपलिप्तोनम् ॥६॥**

व्याख्यार्थः। प्रग्रहणाद् गते काले अभीष्टमोक्षाद्वाभीष्टकाले साध्यं यस्मिन् काले कर्त्ता इष्टग्रासं कर्त्तुमिच्छति तत् कालं प्रग्रहणस्थित्यर्द्धादपास्य मौक्षिकाद्वा यच्छिष्टं तद्वीष्टस्थितिदलं भवति। तेन चन्द्रार्कभुक्ती संगुण्य षष्ट्या विभजनावाप्तेन फलेन चन्द्रमा ऊनः कार्य्यः। प्रग्रहणाद् गते काले राहुश्चाधिकः कार्य्यः।

अथ मोक्षाच्छेषे काल इष्टग्रासः क्रियते तदा स्वफलेन चन्द्रोऽधिकः राहुश्चोनः। एवं यथोक्तेन विधिना तात्कालिकौ कृत्वा ताभ्यां विक्षेपः सकोटिः परिकल्प्यः लिप्तिकाश्च भुजतो ज्ञायन्ते। कास्ता लिप्तिकाः। ब्रह्म-गुप्तेन नोक्तं कथमिति। न्यायसिद्धत्वात्। यदानेनाहोरात्रप्रमाणेन ६० षष्टिघटिकेन रविचन्द्रभुक्त्यन्तरं संगुण्य षष्ट्या विभज्यावाप्तलिप्तिकाः सा भुजा भवति। ततो भुजा भवति। ततो भुजावर्गकोटिवर्गयोर्योगमूलं कर्णो भवति। तेन कर्णेन ग्राह्यग्राहकैक्यार्द्धं ऊनीकृत्य यच्छेषं स तात्कालिको ग्रासो भवति। मध्ये विक्षेपलिप्तोनमिति। यथेष्टग्रासकर्णेनोनं मानैकार्द्धं कृत्वा मध्यग्रासो भवति।

अथोदाहरणम्। प्रग्रहणान्ते काले इष्टग्रासः क्रियते। तत्र प्रग्रहण-स्थित्यर्द्धमिदम् ४।७। अस्मादभीष्टकालोऽयम् १।० संशोध्य शेषम् ३।७। एतद्

वीष्टस्थितिदलम्। अनेन भुक्त्यन्तरमिदम् ६६२।३० संगुण्य षष्ट्या विभज्याप्तमलिप्तिकाः ३४।२५। एवा भुजा। *वीष्टस्थितिदलेन चन्द्रराहू तात्कालिकौ जातौ इमौ ४।५ ४५।४८॥ ४।१०।१।३२॥ आभ्यां विक्षेपः २०।० एषा कोटिः अस्या वर्गः ४००। तथा भुजवर्गोऽयम् १८८४।२० अनयोर्योगः २२८४।२०। अस्य मूलम् ३८।४८। एतस्मान्मानैक्यार्द्धादस्मात् ५०।१० विशोध्य शेषम् १०।२२ एष तात्कालिको ग्रासः। एवमन्यत्राप्युदाहरणीयमिति तथा चोक्तं ग्रान्थे—

> भुक्त्यन्तरमिष्टोनस्थितिदलघटिकागुणं हृतं षष्ट्या।
> बाहुः प्राग्वत् तत्फलहीनयुतैः सूर्य्यशशिपातैः॥
> तात्कालिकविक्षेपः कोटिस्तद्वर्गयुतिपदं कर्णः।
> मानैक्यार्द्धात् कर्णं विशोध्य तात्कालिको ग्रासः॥ इति॥

अधुना ग्रासतात्कालिकानयनमाह। स ब्रह्मगुप्तेन योऽस्माभिरिह व्याख्यायते। यासां ग्रासलिप्तानां काल क्रियते ता लिप्ताः ग्राह्यग्राहकमानार्द्धाद् विशोध्य शेषस्य कृतेः मध्यग्रहणिकविक्षेपस्य कृतिं विशोध्य शेषस्य मूलं षष्टिघ्नभुक्त्यन्तरेण विभज्याप्तादिफलम्। तेन लिप्तादिफलेन चन्द्रराहोर्भुक्ती संगुण्य षष्ट्या विभज्याप्तेन फलेन चन्द्रोऽधिकः कार्य्यः। राहुश्चोनः। ततस्ताभ्यां विक्षेपः तस्य कृतिं मानैक्यार्द्धकृतेः संशोध्य शेषस्य मूलं षष्टिघ्नं भुक्त्यन्तरेण विभज्याप्तं घटिकादिफलं भवति। तेन भूयश्चन्द्रराहू तात्कालिकौ ताभ्यां विक्षेपः। तस्य कृतिम् इष्टग्रासोनमानैक्यार्द्धकृतेः संशोध्य शेषस्य मूलं षष्ट्या हतं भुक्त्यन्तरेण विभज्याप्तं घटिकादिफलम्। एवं तावत् कार्य्यं यावत् घटिकादिफलमविशेषं भवति। तच्च प्रग्रहणिकस्फुट-स्थित्यर्द्धादपास्य शेषः कालो भवति तासां ग्रासलिप्तानां ग्रहणादूर्ध्वम्। अथ मोक्षशेषे ग्रासलिप्ताप्रश्नः। तदा मोक्षस्थित्यर्द्धादपास्य यः कालो भवेदिति। तद् यथा ग्रासलिप्ता १०।१२ एता मानैक्यार्द्धादस्मात् ५०।१० संशोध्य शेषं ३९।५८ अस्य कृतिः १५८६।२४ अस्माद्विक्षेपकृतिरियं २८८ संशोध्य शेषमिदं १२०७।२४ अस्य मूलं ३६।८ एतत् षष्ट्या संगुण्य भुक्त्यन्तरेण विभज्याप्तं घटिकादिफलम् ३।१५ अनेन चन्द्रराहोर्भुक्ती संगुण्य षष्ट्या विभज्याप्ते फले

३८।१०।०।० प्रग्रहणात् गतकालत्वात् पञ्चस्य स्वफलेन समलिप्तस्पष्ट अत । राहुस्वाधिकः। एवं प्रग्रकालिकौ जातौ ४।५।४४।१३ ॥ ४।१०।१।१४ ॥ आभ्यां विक्षेपः २०।४ अस्य कृतिः ४२०।४० इष्टग्रासोनमानैक्यार्द्धकृतिरस्याः १५८६।२४ संशोध्य शेषस्य मूलं ३४।३३। षष्ट्या संगुण्य भुक्त्यन्तरेण विभजनावाप्तं घटिकादिफलम् ३।७ अनेन चन्द्रराहू तात्कालिकौ कृतौ जातौ ४ ५।०।४८ ॥ ४।१०।१।३४ आभ्यां विक्षेपवर्गः ४०० इष्टग्रासोनमानैक्यार्द्धकृतिरस्याः १५८६।२४ संशोध्य शेषम् ११८६।२४ अस्य मूलम् ३४।३५ एतत् षष्ट्या संगुण्य भुक्त्यन्तरेण विभजनावाप्तं घटिकादिफलं ३।७ एतत् स्थिरीभूतं प्रग्रहणस्थित्यर्द्धादस्मात् ४।८ विशोध्य शेषम् १।० एतावान् कालो दशानां ग्रासलिप्तानां पञ्चभागाधिकानामिति। तथा चोक्तं शास्त्रे—

असकृद् ग्रासकलोनप्रमाणयुतिदलकृतेर्विशोध्य कृतिम्।
तात्कालिकविक्षेपस्य शेषस्य मूलं कृतं तिथिवत् ॥
प्रग्रहणस्थित्यर्द्धात् प्रोह्य प्रग्रहणतो भवेत् कालः।
मोक्षं विशोध्य मोक्षस्थित्यर्द्धात् प्रागभवेन् मोक्षात् ॥ इति।

अधुना वलनांशानयनमाह—

त्रिज्याप्तचापभागैर्नताक्षजीवावधाद्दृग्याम्यैः
पूर्व्वापरयोः पूर्व्वा त्रिभयुग्ग्राह्यायनांशैश्च ॥७॥

त्रिजयाप्तं तस्य चापं त्रिजयाप्तचापं तस्य भागाः त्रिजयाप्तचापभागास्तै-स्त्रिजयाप्तचापभागैः। न आयतं कुतः त्रिजयाचापमाद्यं भवति। नताक्षजीवावधात्। नतेन अक्षजयाया वधः नताक्षजीवावधः। तस्मान्नताक्षजीवावधात्। तैरंशैर्दृग्याम्यैः। पूर्व्वापरयोर्यासंख्यं ग्राह्यमण्डलपूर्व्वा दिक् वलनं भवतीति। त्रिभयुक् ग्राह्यायनांशैश्चेति। न केवलमक्षांशैर्ग्राह्यमण्डलस्य पूर्व्वा वलिता भवतीति यावत् त्रिभयुग्-ग्राह्यायनांशैश्चसंदर्शितैर्वा वलिता भवन्तीति वाक्यार्थः। अस्यार्थम्। यस्मिन् काले वार्त्ता वलनं विकीर्षति प्रग्रहण-निमीलन-मध्योन्मीलनमोक्षेष्टग्रासानामन्यतमे तदा तस्मिन् काले नतं ग्राह्यम्। आदित्यग्रहे आदित्यमध्याह्नात् चन्द्रग्रहे तु चन्द्रमध्याह्नात्। चन्द्रस्य

उदयास्तलग्ने प्रसाध्य तदन्तरादिनप्रमाणं ज्ञात्वा तदर्द्धं चन्द्रदिनार्द्धं भवति। तस्माच्चन्द्रदिनार्द्धात् नतं ग्राह्यम्। अत्र केचित् चन्द्रग्रहणे अर्द्धरात्रान्नतं गृह्णन्ति। अल्पान्तरत्वात् कर्म्मबहुत्वाच्च। तस्माद्यथोक्तेन विधिना नतं गृहीत्वा तस्मादुत्क्रमज्या ग्राह्या॥ पञ्चदश-घटिकाभ्योऽधिकं नतं भवति तस्मात् प्राग्वोक्ततादुत्क्रमज्या कर्त्तव्या। सा च स्वदेशाक्षज्यया संगुण्य त्रिज्यया विभज्यावाप्तं लिप्तादिफलम्। तस्य ज्याखण्डैन इति चापं कार्य्यम्। तस्य षष्ठ्या भागमपहृत्याक्षवलनांशा भवन्ति।

ते च पूर्व्वकपालस्थे ग्राह्ये उत्तराः। अपरकपालस्थे दक्षिणा इति। स्वरात्रार्द्धात् मध्याह्नं यावत् तावत् ग्राह्यस्य पूर्व्वकपालम्। स्वमध्याह्नादारभ्यार्द्धरात्रं यावदपरकपालम्। अथ च वलनम्। तात्कालिकग्रहे राशित्रयं दत्त्वा तस्मात् त्रिरसगुणाद्यैः खण्डाः कर्त्तव्याः। तद् यथापरतोक्तं तथापुरत्क्रमेण कार्य्या। यस्मादुक्तम् ग्राह्यात् सत्रिगृहात् क्रान्तिरुत्क्रमज्याभिरानयेत्। सा च चन्द्रस्यापि विक्षेपयुतवियुता न कार्य्या विक्षेपस्य पृथक् विनियोगत्वात् परिलेखे यस्मादुक्तम् व्यासार्द्धे वलनज्यामानैक्यार्द्धे पृथक् स्वक्षेपाः इति। यतोऽयनांशानां व्यासार्द्धवृत्ते विनियोगः। विक्षेपस्य पुनः मानैक्यार्द्धवृत्ते तस्मात् विरुद्धमिति चन्द्रमसो युतवियुता तत्क्रान्तिर्न कर्त्तव्येति। तावत् संक्रान्तिखण्डकैरेव ज्ञातानां क्रान्ति विकलानां षष्ठ्या भागमपहृत्य येऽयनांशा भवन्ति ते च सात्रिभे ग्राह्याः। मेषादिस्थे उत्तरा तुलादिस्थे दक्षिणा इति। तत्रापि केचित् मकरादावुत्तरमयनमिच्छन्ति। कर्कादौ दक्षिणमिति। तन्नेष्यते। विकल्पेन मेषादावुत्तरं तुलादौ दक्षिणमिति। ततस्तेषामयनांशानां अक्षवलनांशानां च एकदिक्त्वे योगः। अन्यदिक्त्वे वियोगः। योगे दिक् स्यायते इति। वियोगे योऽधिकस्तस्य या दिक् सा वलनांशानां दिगिति। तावद्भिरंशैर्ग्राह्यमण्डलस्य पूर्व्वा दिक् वलिता भवति।

यथोदाहरणम्। चन्द्रग्रहे नतज्येयम् २५।४६ अनया स्वदेशाक्षज्यामिमां ७५।२६ संगुण्य जाता १८४२।४० अस्य त्रिज्यया भागे हृतेऽवाप्तं लिप्तादिफलं १२।५७ अस्य चापमिदं २८४ अस्य षष्ठ्या भागे हृते वलनांशाः ४।५४ एते ग्राह्यस्य पूर्व्वकपालत्वादुत्तरा। प्रग्रहणिको ग्राह्यः सत्रिभः ७ ५।२३।४६

अस्य क्रान्त्यंशा दक्षिणगोलत्वात् याम्याः ४।४८।३१ एतेषामक्षवलनांशैः सह भिन्नदिक्त्वाद् वियोगः। क्रान्ति... मूलत्वाद् उत्तरा (?) एते ०।४।२८ एतावद्भिरंशैः चन्द्रमण्डलस्य पूर्व्वा दिक् उत्तरवलिता भवति। एवं निमीलन-मध्योन्मीलन-मोक्षेष्टग्रासेषु तात्कालिकग्राह्ये तात्कालिकया नतज्यया वलनांशा आनेया इति। एतच्चार्थमुत्तरे सप्रपञ्चं परिलेखोदाहरणं वक्ष्यामि।

इति भट्टमधुसूदनसुत-चतुर्व्वेद-पृथूदकस्वामि कृते
खण्डखाद्यविवरणे चन्द्रग्रहणाध्यायश्चतुर्थः ॥

---

# अथ सूर्य्यग्रहणाध्यायः

विष्णुं त्रैलोक्यभर्त्तारं प्रणम्य शिरसा शुचिः ।
भाष्यं तत्त्वार्थबहुलं वक्ष्येऽर्कग्रहणे स्फुटम् ॥

अथादित्यग्रहणाध्यायो व्याख्यायते । तत्रादावेवामावस्यायां अर्कचन्द्रावर्द्धरात्रिकौ कृत्वा राहुश्च । ततोऽर्कचन्द्राभ्यां सकाशात्तिथ्यन्तमुत्पाद्य तस्मिन् तिथ्यन्ते चन्द्रग्रहणोक्तविधिनार्कचन्द्रावसकृत् कर्म्मणा स्फुटौ कार्य्यौ । तौ च तिथ्यन्ते समलिप्तौ भवतः । पातश्च तात्कालिकः कार्य्यः । एवं कृत्वाधुना मध्यग्रहणिकस्फुटतिथ्यन्तार्थं लम्बनघटिकानयनार्थमार्य्याद्वयमाह—

**वित्रिभलग्नापक्रमविक्षेपाक्षांशयुतिविशेषोनात्**
**भवितयाज्ज्याछेदस्त्रिज्यार्द्धकृतेः फलेन हृता ॥१॥**
**वित्रिभलग्नार्कान्तर-जीवा घटिकादिलम्बनं सूर्य्ये**
**ऋणमधिके धनमूने वित्रिभलग्नात्तिथावसकृत् ॥२॥**

विगतं त्रिभं वित्रिभम् । वित्रिभं च लग्नं च वित्रिभलग्नं तस्मात् वित्रिभलग्नात् । अपक्रमविक्षेपौ वित्रिभलग्नापक्रमविक्षेपौ । अपक्रमविक्षेपौ च अक्षांशाश्च तेऽपक्रमविक्षेपांशाः । तेषां युतिः योगजाः तेषां भिन्नदिक्त्वे सति शोधनीयमित्यर्थः । तेनापक्रमविक्षेपाभ्यां संयुतिविशेषोनम् । किं तत् भवितयम्? राशित्रयमित्यर्थः । तस्मादपक्रमविक्षेपांशयुतिविशेषोनात् । ज्याछेदो भवति । कस्या उच्यते त्रिज्यार्द्धकृतेः । त्रिज्यायाः अर्द्धं त्रिज्यार्द्धं तस्य कृतिः त्रिज्यार्द्धकृतिः तस्याः त्रिज्यार्द्धकृतेः फलेन हृता यदवाप्तं तेन हृता कासौ वित्रिभलग्नार्कान्तरजीवा वित्रिभलग्नार्कयोरन्तरं वित्रिभलग्नार्कान्तरम् । तस्मात् जीवा वित्रिभलग्नार्कान्तरजीवा विभक्ता फलेन लब्धं घटिकादिफलं लम्बनम् । ऋणमधिके धनमूने सति सूर्य्ये क्रमः । वित्रिभलग्नात् कस्मिन् ऋणं धनं वा । तिथौ पञ्चदशतिथौ इत्यर्थः ।

कारणम्। समलिप्तादर्कादभुक्तभागान् संगृह्य पञ्चदशान्तमिष्टकालं परिकल्प्य तस्मात् क्रान्तिं प्रथमवत् कृत्वा तथा स्वदेशाक्षं सदा दक्षिणमेकदिक् युतं कर्त्तव्यं भिन्नदिक् वियुतमेवं कृते यद् भवति तत् युतिविशेषं भवति। अत्र यद्यपि विक्षेपः पठितः तथाप्यत्र नति-कर्म्मणि च कर्त्तव्ये न लम्बन-कर्म्मणि इति सम्प्रदायः।

तथा चोक्तं ब्राह्मे—

लग्नात्त्रिराशिहीनादपक्रमाक्षांशयुतिविशेषोनात्।
भक्तिवयाद् ज्या भक्ता त्रिज्याऽर्ककृतेः फलेन हृता॥
त्रित्रिभलग्नार्कान्तरजीवा घटिकादिलम्बनं सूर्य्ये। इति।

पुनरपि कथ्यते। लम्बनकर्म्मणि विक्षेपो न कर्त्तव्यः। क्रान्त्यंशानामक्षांशानां च युतिविशेषं कृत्वा तत्र भवति। तान् संशोध्य भागनवतेरित्यर्थः। शेषस्य जीवा कार्य्या। तया त्रिज्यार्ककृतिं विभज्य षट्पञ्चाशत् शतानि पञ्चविंशत्यधिकानीत्यर्थः। ५६२५। ताभ्यां विभज्य छेदेन लब्धं फलसंज्ञं भवति। ततो त्रित्रिभलग्नसमलिप्तार्कयोरन्तरं कृत्वा तस्माज्जीवा कार्य्या। तां फलेन विभज्य घटिकाः तिथ्यन्तात् शोध्याः। त्रित्रिभलग्नादूने समलिप्ते सूर्य्ये लम्बनघटिकास्तिथ्यन्ते देयाः। एवं कृते मध्यमग्रहणिकः स्फुटतिथ्यन्तो भवति। स चासकृत् कर्त्तव्यः। तत् कारणम्। लम्बन-घटिकाभिरर्कभुक्तिं संगुण्य षष्ट्या विभज्यावाप्तं घटिकादिफलं सूर्य्ये धनमृणं वा कार्य्यम्। यदि तिथ्यन्ते लम्बनघटिका धनं कृताः तत् सूर्य्येऽपि फलं धनम्। अथवा ऋणं कृतं तत् सूर्य्येऽपि फलमृणमिति। ततस्तात्कालिकात् सूर्य्यात् प्राग्वल्लग्नं कृत्वा भत्रयरहितं कार्य्यम्। तस्मादपक्रमांशाः। ते स्वाक्षांशैः सह समदिग्योगः। भिन्नदिग्वियोगः। एवं कृते युतिविशेषं भवति। तत् भत्रितयादपास्य शेषस्य ज्या कार्य्या। तया त्रिज्यार्ककृतिं विभज्य लब्धफलेन त्रित्रिभलग्नान्तरं विभज्य घटिकादिफलं लम्बनं लभ्यते। तत्र पञ्चदश्यन्ते लम्बनसंस्कृते सूर्य्ये ऋणमधिके धनम् इति धनमृणं कृत्वा सूर्य्यं च तात्कालिकं कृत्वा तस्माल्लग्नम्। ततो त्रित्रिभलग्नेति पुरःसरेण कर्म्मणा लम्बनघटिका आनीय ताभिः पञ्चदश्यन्तमसकृत् संस्करणीयम्। एवं भूयोभूयस्तत्कार्य्यं यावल्लम्बन-

घटिका अविशेषा भवन्ति। पञ्चदश्यन्तं च लम्बनसंस्कृतं स्थिरं भवति। स च मध्यग्रहणिकतिथ्यन्तो भवति। अत्र केचित् लम्बनघटिकाः पूर्वकपाले ऋणमपरकपाले धनमिच्छन्ति पञ्चदश्यन्ते तन्नेष्यते। यस्मादपरकपालेऽपि किञ्चिन्नते सवितरि बहून् वारान् लम्बनमृणं भवति तथा किञ्चिदूने मध्याह्ने बहून् वारान् लम्बनं धनं भवति। तस्मात् सूर्येऽधिके ऋणमूने धनं भवति। सर्वदैवं कार्यम्। अत्र यदा समलिप्तार्कसमं वित्रिभं भवति तदा लम्बनाभावः। लम्बनाभावे य एव पञ्चदश्यन्तः स एव मध्यग्रहणिकः स्फुटतिथ्यन्तः। अथोदाहरणं तद् यथा।

शाकेऽस्मिन् ७८४ अस्मिन्नेव दिने कुरुक्षेत्रे अर्कचन्द्रौ देशान्तरसंस्कृतौ स्फुटौ कृत्वा ताभ्यां तिथ्यन्तमुत्पाद्यासकृत्कर्मणाऽमावास्यान्तमिदं २२।५०। अस्मिन् काले अर्कचन्द्रौ समलिप्तौ जातौ ११।१२।३८।१७॥ ११।१२।३८।१७॥ अस्मादादित्यात् त्रिप्रश्नोक्तविधिना लग्नम् ४।१२।४८।३८ एतत् त्रिराशिरहितं कृत्वा अस्मादपक्रमांशाः १५।५८।१८ एते उत्तराः। स्वाक्षांशा एते ३०।१२। एतेषां भिन्नदिक्त्वाद् वियोगं कृत्वा जातम् १४।१३।४१। एते युति विशेषभागाः भागनवतेः संशोध्य शेषं भागाः ७५।४६।१८ एतेषां जीवया अनया त्रिज्यार्द्धकृतिमिमां ५६२५ विभज्याबाप्तफलं ३८।४३ अनेन छेदेन समलिप्तार्कवित्रिभलग्नान्तरज्यामिमां १३०।८ विभज्यावाप्तं घटिकादिफलं धनं तच्चेदं ३।६। एतत् पञ्चदश्यन्ते २२।५० सूर्यस्य वित्रिभलग्नादूनत्वात् धनं कृत्वा जातः स्फुटतिथ्यन्तः २५।५६। एताभिरेव लम्बन-घटिकाभिः सूर्यस्य स्फुटभुक्तिमिमां ५८।८ संगुण्य षष्ट्या विभज्यावाप्तं फलं ३ ४ एतेन फलेन समलिप्तिकोऽर्को जातः ११।१२ ४२।२१। अस्मात्त्रिप्रश्नोक्तविधिना लम्बनसंस्कृततिथ्यन्तमिष्टकालं परिकल्प्य लग्नं कृतं ४।२८।३४।२ एतस्माद् राशित्रयमपास्य जातं वित्रिभं १।२८।३४।२ अस्मादपक्रमांशाः २०।१५।२७॥ एते उत्तराः अक्षांशेभ्यः एतेभ्यः ३०।१२ संशोध्य शेषं ८।५६।३३ एतन्नवतेः संशोध्य शेषं ८०।३।२७ अस्य जीवा १४६ अनया त्रिज्यार्द्धकृतिं विभज्यावाप्तं फलम् ३८। अनेन वित्रिभलग्नार्कान्तरज्यामिमां १४६ विभज्यावाप्तं घटिकादिलम्बनम् ३।४७ एतत् पञ्चदश्यन्ते धनं कृत्वा मध्यग्रहणिकः स्फुटतिथ्यन्तो जातः २६।३७। अस्मिन् काले तात्कालिकोऽर्कः कृतो जातः ११।१२।४३।० अस्मात् त्रिप्रश्नोक्तविधिना स्फुट-

तिथ्यन्तमिष्टकालं परिकल्प्य लग्नं ज्ञातं ५।२।४।०। त्रिराशिहीनं २।२।४।० अस्मात् क्रान्तिरुत्तरा १२।५८। अक्षेण सह वियोगं कृत्वा जातं युतिविशेषं ५५४। एतद् भवितयात् संशोध्य शेषम् ८०।४६। अस्य ज्या १४७ अनया त्रिज्यार्द्धकृतिं विभज्यावाप्तं फलं ३८ अनेन वित्रिभ-लग्नार्कान्तरज्यां विभज्यावाप्तं फलं धनं तच्चेदम् ३।४८ एतत् पञ्चदश्यन्तेऽस्मिन् २२।५० धनं कृत्वा जातः स्फुटतिथ्यन्तः २६।३८। अस्मिन् कालेऽर्कस्तात्-कालिकः एवं तावत् कार्य्यं स्थिरीभूतमेवं पञ्चदश्यन्ते करणागते धनं कृत्वा जातो मध्यग्रहणिकः स्फुटतिथ्यन्तः २६।३८। अनेनार्कचन्द्रराहु-भुक्तयः पृथक् संगुण्य षष्ट्या विभज्यावाप्तानि फलानि। ततः स्वफलेनार्क-चन्द्रावधिकौ कृतौ राहुर्हीनः। लम्बनस्याधिकत्वात्। अथचेद् ऋणगतं स्यात्तदा स्वफलेनार्कचन्द्रावूनीकार्य्यौ। अस्मिन् उदाहरणम्। लम्बनं धनगतं तेनार्कचन्द्रावधिकौ कृतौ राहुर्हीनः। जाता मध्यग्रहणिकार्कचन्द्रराहवः।

| | | |
|---|---|---|
| ११ | ११ | ५ |
| १२ | १२ | १६ |
| ४१ | २७ | ४३ |
| २३ | ५४ | २१ |

एवमन्यत्राप्युदाहरणीयम्। अधुना च नत्यानयनमाह—

ये युतिविशेषभागास्तज्ज्यावनतिर्गुणा त्रयोदशभिः।
खाब्धिहृता विक्षेपं कृत्वा तात्कालिकशशाङ्कात् ॥३॥

ये इत्यनेन सर्व्वनाम्ना गतार्थं परामृशति। असकृत् वार्थेऽपि लम्बने क्रियमाणे युतिविशेषभागाः तेषां ज्या सावनतिर्भवति। किम्भूता त्रयोदश-गुणा खाब्धिहृता चत्वारिंशता हृतेत्यर्थः। विक्षेपं कृत्वा तात्कालिक-शशाङ्कादिति मध्यमग्रहणिकचन्द्रात्। मध्यग्रहणिकेन पातेन चन्द्र-ग्रहणोक्तेन विधिना विक्षेपः कर्त्तव्य इति वाक्यार्थः।

करणम्—यस्मिन् वित्रिभे लम्बनं स्थिरीभूतं तस्मादपक्रमांशाः कार्य्याः। तत्र वित्रिभं चन्द्रमसं परिकल्प्य तस्मात् मध्यग्रहणिकं राहुं विशोध्य शेषस्य जीवां नवभिः संगुण्य पञ्चभिर्विभज्यावाप्तं फलं विक्षेपो भवति। ततोऽपक्रमांशानामक्षांशानां च विक्षेपस्य एकदिक् योगः कार्य्यः।

भिन्नदिक् वियोगः एवं कृते युतिविशेषभागाः भवन्ति। तेषां युतिविशेष-भागानां त्रिंशत्सनवेति जीवा कार्य्या। सा त्रयोदशभिः संगुण्य चत्वारिंशता विभज्यावाप्तं लिप्तादिफलमवनतिर्भवति। तस्या युतिभाग-वशेन दक्षिणोत्तरत्वं ज्ञातव्यम्। यदि युतिविशेषभागाः दक्षिणाः तदा दक्षिणा। यदोत्तराः तदोत्तरा। सा च यत्र देशे अष्टाविंशतिभागाः सर्व्वाः स्वाक्षांशाः यस्माद्देशादुत्तरेण ये देशास्तेषु न कदाचिदप्युत्तरा भवति। अथ प्रकारान्तरेण अवनतिर्व्वानीयते। युतिविशेषभागज्यां रविशशिमध्यम-भुक्त्यन्तरेण संगुण्याम्बरपञ्चयमाश्विभिर्विभज्यावाप्तम्। द्वाविंशतिभिः सार्द्धैः शतैरित्यर्थः २२५०। लब्धं फलं लिप्ता अवनतिर्दक्षिणा। एवमवनतिं प्रसाध्य मध्यमग्रहणिकचन्द्रात् मध्यग्रहणिकपातं विशोध्य चन्द्रग्रहणोक्त-विधिना विक्षेपः कार्य्यः इति। यस्मादुक्तं विक्षेपं कृत्वा तात्कालिक-शशाङ्कादिति।

अथोदाहरणम्। तद् यथा। असकृत् कर्म्मणि वित्रिभ लग्नम् २।२।४।५२। अस्मादक्रमांशाः उत्तराः। अस्मादपि चन्द्रविक्षेपः २६१। स्वाक्षांशाः ३०।१२। एतेषां त्रयाणां क्रमान्त्यंशाः भिन्नदिशः। अस्मादक्षांश-विक्षेप-युतेः संशोध्य शेषाः युतिविशेषभागाः १३।२७ एतेषां त्रिंशत् सनवेति जीवा कृता ३५। एषा त्रयोदशगुणा जाता ४५५। अस्य चत्वारिंशता भागे हृते फलं लिप्तादि ११।२२ एषावनतिः। युतिविशेषभागाः दक्षिणाः। अथ मध्यग्रहणिकौ चन्द्रपातौ—

| | | |
|---|---|---|
| ११ | ५ | अभ्यां विक्षेपः उत्तरः १५।२८ |
| १२ | १६ | |
| २७ | ४३ | |
| ५४ | २१ | |

अधुना विक्षेपस्फुटीकरणं शशिनो निर्द्देशार्थं चाह।

संयोगान्तरमवनतिशशाङ्कविक्षेपयोः समान्यदिशोः।
स्फुटविक्षेपः शशिवत् स्थित्यर्द्धविमर्द्ददलनाद्यः ॥४॥

संयोगान्तरं वा समान्यदिशोः कर्त्तव्यम्। समान्यदिशोरवनति-शशाङ्क-विक्षेपयोः। अवनतिश्च शशाङ्कविक्षेपश्च अवनतिशशाङ्कविक्षेपौ

तयोरवनतिशशाङ्कविक्षेपयोः। एकदिक् योगो भिन्नदिक् वियोगः। एवं कृते मध्यग्रहणिक-स्फुटविक्षेपो भवति।

करणम्—ये युतिविशेषभागैरिति यावनतिः। कृत्वा तस्य मध्यग्रहणिक-चन्द्रात् मध्यमग्रहणिकपातेन यः कृतो विक्षेपः तेन विक्षेपेण विक्षेपं संशोध्य ते ग्रासलिप्ताः साध्याः। छाद्यार्द्धछादकदलस्य युक्तोनकस्य वर्गाभ्यां विक्षेप-कृतिं प्रोह्येतिन्यायेन स्थित्यर्धविमर्दार्धे प्रसाध्ये। उदाहरणम्। तद् यथा। अवनतिर्दक्षिणा ११।२५। मध्यग्रहणिकविक्षेपश्चोत्तरः १५।२८ अनया भिन्नदिकत्वाद्वियोगं कृत्वा जातम् ४।३। विक्षेपस्याम्तराधिकत्वात् एष स्फुट-विक्षेपो उत्तरः मध्यग्रहणिकः। अनेन प्राग्वत् ग्रासलिप्ताः साध्याः। स्थित्यर्द्धं विमर्द्दार्द्धं चेति। शशिवत् स्थित्यर्द्धविमर्द्ददलनाद्य इति। शशिना तुल्यं शशिवत्। एतदुक्तं भवति। तद् यथा स्थित्यर्द्धविमर्द्ददलनाद्याः कृताः। एवं सूर्य्यस्यापि कार्य्या इति। तत् करणम्। एकादशदशगुणिते हृते नखैः खरजिनैर्गतौ माने। इत्यर्कचन्द्रयोर्माने प्रसाध्ये। राहुमानेनात्र प्रयोजनं नास्ति। यतोऽर्कः ग्राह्यः। चन्द्रमा ग्राहक इति। ततो विक्षेपं संशोध्य प्रमाणयोगार्द्धतस्तमस्छन्नमिति ग्रासलिप्ताः प्रसाध्याः। ततः सर्व्वग्रहणम् ग्राह्यादधिके खण्डग्रहणमूने। इति खण्डग्रहणं सर्व्वग्रहणं वा परिज्ञातव्यम्। ततः छाद्यार्द्धेन छादकदलस्य युक्तोनकस्य वर्गाभ्यां विक्षेपकृतिं प्रोह्य पदे तिथिवत् स्थितिविमर्द्दार्द्धे इति स्थित्यर्द्धविमर्द्दार्द्धे प्रसाध्ये ततो भुक्तिः षष्टिहृता स्थितिविमर्द्ददलनाडिका गुणार्कोन्दोः। आदावृणमन्ते धनमसकृत्तेनान्यथापाते। इत्यसकृत् स्थित्यर्द्धविमर्द्दार्द्धे साध्ये ते चोपकरणस्थित्यर्द्धविमर्द्दार्द्धे भवतः। तयोः स्पष्टीकरणं वक्ष्यति। प्राग्वल्लम्बनमसकृदिति। इष्टग्रासः शशिवत् कार्य्यः। स च स्फुटतिथ्यर्द्धेन विना न शक्यते कर्त्तुम्। तस्मात् स्फुटयोः स्थितिविमर्द्दार्द्धयोरिष्टकालं वक्ष्यति। इति शशिवत् वलनांशाः। त्रिज्याप्तचापभागैर्नताक्षजोवा-वधादुदक्, याम्यैः। पूर्व्वापरयोः पूर्व्वा त्रिभयुक् ग्राह्यायनांशैश्चेति। अथोदाहरणम्—भवदशगुणिते रविशशिगतौ इति रविचन्द्रयोर्माने | १२ / ४३ |

| ३० / ५७ | विक्षेपं (४।३) संशोध्येति ग्रासलिप्ता | २७ / ४७ | एता ग्राह्यमानादस्मात् | १२ / ४३ | ऊना इति। तस्मात् खण्डग्रहणम्। ततः स्थित्यर्द्धविमर्द्दार्द्धे।

छादकदलं १५।२८ एतत् छाद्यार्द्धमानेनानेन | १६ / २१ | युतं जातं ३११५०

अस्य कृतिः १०१२।४०। अस्माद् विक्षेपकृतिमिमां १६।२४ संशोध्य शेषं ८८६।१६ अस्माद् मूलमेतत् २११३२ षष्ट्या संगुण्य भुक्त्यन्तरेण विभज्याप्तं २।४१ एतत् स्थित्यर्द्धम्। अथ विमर्द्दार्द्धं तद् यथा—छादकदलमिदम् १५।२८ अस्मात् छाद्यदलमिदम् १६।२१ न शुध्यति तस्मात् विमर्द्दार्द्धाभावः। भावे तु पुनः प्राग्वत् मर्द्दार्द्धं कार्य्यम्। अथ स्थित्यर्द्धमसकृत् क्रियते। भुक्तिः षष्टि-हृतेति प्रग्रहणिकं स्थित्यर्द्धं स्थिरीभूतं तच्चेदम् २।४०। मौक्षिकं च स्थिरीभूतं तच्चेदं २।४१ एते त्रिप्रकारेण स्थिरीभूते। विमर्द्दार्द्धेऽप्येवं कर्त्तव्ये।

अत्रोदाहरणं नास्तीति। अधुना स्थित्यर्द्धविमर्द्दार्द्धयोः स्थिरीकरणमन्यत् द्वितीयमाह—

प्राग्वल्लम्बनमसकृत्तिथ्यन्तात् स्थितिदलेन हीनयुतात्
तन्मध्यान्तरयुक्तं स्थितिदलमेवं विमर्द्दार्द्धम् ॥५॥

अधिकेऽधिकान्तरज्यालम्बनमेवं तद्दृणधनैकत्वे।
हीने हीनं भेदे तदैक्ययुतमुक्तमन्त्ये च ॥६॥

प्राग्वल्लम्बनं कार्य्यम्। तच्चासकृत् कार्य्यं कुत इति चेत् तिथ्यन्तात् किम्भूतात् स्थितिदलेन हीनयुतात्। हीनाद्धीनाच्च कर्त्तव्यं युताच्च। तन्मध्यान्तरयुक्तं कर्त्तव्यम्। प्रग्रहमध्यलम्बने परामृशति। तथा मध्यमोक्षलम्बने च। तयोर्मध्यं तन्मध्यम्। प्रग्रहणमध्यलम्बनयोर्मध्य इत्यर्थः। तथा मध्यमोक्ष-लम्बनयोरित्यर्थः। तेन मध्यान्तरेण युक्तं तन्मध्यान्तरयुक्तं किं तदुच्यते स्थितिदलम्। यथा स्वकीयेन स्वकीयस्थितिदलं युतं कर्त्तव्यमित्यनेन विमर्द्दार्द्धं यथा स्थितिदलेन हीनयुतात् तिथ्यन्तात् प्रग्रहणमोक्षलम्बने कृते एवमपि तिथ्यन्तात् विमर्द्दार्द्धेन हीनयुतात् निमीलनोन्मीलने साध्ये इति। वक्ष्यमाणं च धनर्णसद्भावमित्यार्य्यार्द्धं। किं नियमाद्धीयते नियममिति भवति। अधिकेऽधिकान्तरज्यालम्बनं एतद्दृणधनैकत्वे इति। अत्राधि-कान्तरज्यालम्बनशब्दे क्रियमाणे लम्बनमुच्यते। प्रग्रहणिकं मौक्षिकं वा। तेनायं वाक्यार्थः। अधिके सति। वाक्यम्। अधिकान्तरज्यालम्बने कुतः

मध्यग्रहणलम्बनात्। ऊने प्रग्रहणे सति मौक्षिके चाधिके सति तद्दृग्धनैकत्वे इति। तयोर्प्रग्रहणमध्यलम्बनयोर्यदि ऋणैकत्वं स्यात् तदा मध्यमोक्ष-लम्बनयोश्च धनैकत्वं स्यात्। तदा तन्मध्यान्तरेण युक्तं स्थितिदलमिति प्रागार्य्याभिहितं कार्य्यम्। यस्मादुक्तम्। तन्मध्यान्तरयुक्तं स्थितिदलमेवं विमर्दमधिकेऽधिकान्तरव्यालम्बनमेवं तद्दृग्धनैकत्वे इति। यथोक्तेन धनर्णं ज्ञेयमिति। मध्यलम्बनात् प्रग्रहणे हीने ऋणैकत्वे च। तन्मध्यान्तर-हीनं स्थितिदलं कार्य्यम्। यस्मादुक्तं हीने हीनमिति। शेषं च धनैक्य-न्यायसिद्धत्वात्। तथा प्रग्रहणमध्यलम्बनयोः धनैकत्वं स्यात्। प्रग्रहणिके चोनं यदा भवति। ततः पर्य्यादिदमापन्नं भवति। तन्मध्यान्तरयुक्तं स्थितिदलं कार्य्यम्। ततः प्रग्रहणमध्यलम्बनयोः धनैकत्वे सति प्रग्रहणिक-मधिकं भवति। तदाप्यर्थादिदमापन्नं भवति। तन्मध्यान्तरहीनं स्थितिदलं कार्य्यम्। यदा मध्यमोक्षलम्बनयोः ऋणैकत्वेऽपि मौक्षिकमधिकं भवति तदापि तन्मध्यान्तरहीनं स्थितिदलमर्थ्या(?)दापद्यते। भेदे तदैक्ययुतमिति। यदा प्रग्रहणिकमध्यलम्बनयोर्भेदः प्रग्रहणिकमृणगतं मध्यग्रहणिकं धनगतं तदा तयोरैक्यं कृत्वा तेन युतं स्थितिदलं कार्य्यम्। मध्यमोक्षलम्बनयोरपि यदा भेदः स्यात् मध्यग्रहणिकमृणगतं मौक्षिकं च धनगतं तदापि तयोरैक्यं कृत्वा तेन युतं स्थितिदलं कार्य्यमिति। उक्तवच्चेति। ते च स्थित्यर्द्धविमर्द्धे उक्तवत् कार्य्ये। असकृत् कर्त्तव्ये इत्यर्थः। यत् प्रग्रहणलम्बने धनर्णविधानं तत् सर्व्वं निमीलने वा विशेषं कार्य्यम्। यच्च मौक्षिकं लम्बनविधानं तत् सर्व्वमुन्मीलने चावशेषं कार्य्यमिति वाक्यार्थः।

करणम्। तिथ्यन्तो यः करणागतो द्वितीयो लम्बनसंस्कृतः। तल्लम्बन-संस्कृतात्तिथ्यन्तात् मध्यग्रहणिकादसकृत् स्थिरीभूतं प्रग्रहणिकमुन्मीलनस्थित्यर्द्धं विशोध्य शेषमिष्टकालं परिकल्प्य तेन स्थित्यर्द्धेनाकस्मात्कालिकः कर्त्तव्यः। तस्मादुक्तभागैः त्रिप्रश्नोक्तविधिना लग्नं कार्य्यम्। तद्द्विविधं कृत्वा तस्मात् त्रिविभक्तमेति न्यायेन लम्बनं कार्य्यम्। तद् यदि मध्यग्रहणिक लम्बनाधिकं भवति उभे अपि प्रग्रहणिकमध्यलम्बने ऋणगते भवतः तदा तयोरन्तरं कृत्वानेनान्तरेण स्थितिदलहीनं कार्य्यम्। अथ प्रग्रहणिक-मध्यलम्बने धनगते भवतः। प्रग्रहणिकं च लम्बनमूनं भवति। तदा तयोर्लम्बनयोरन्तरं कृत्वा तदन्तरं तात्कालिके स्थितिदले देयम्। अथ

धनैकत्वेऽपि प्रग्रहणिकं लम्बनमधिकं भवति। तदा तयोरन्तरं कृत्वा तेनान्तरेण तात्कालिकं स्थितिदलं हीनं कार्य्यम्। अथ तयोः प्रग्रहण-मध्यलम्बनयोर्भेदो भवति। प्रग्रहणिकमृणगतं मध्यं धनगतं तदा तयो-र्लम्बनयोरैक्यं कृत्वा तात्कालिके स्थितिदले देयम्। एवं कृते यद् भवति तत् प्रग्रहणिकं स्थितिदलं भवति। तेन स्थितिदलेनार्कस्तात्कालिकः कर्त्तव्यः। स्थितिदलं च लम्बनसंस्कृतात्तिथ्यन्तादपास्य शेषमिष्टकालं परिकल्प्य विप्रश्नोक्तेन विधिना लग्नं कार्य्यम्। तत् वित्रिभं कृत्वा तस्माद्वित्रिभलग्नेति पुनरसकृत् कर्म्मणा लम्बनं कार्य्यम्। तच्च मध्यम-ग्रहणिकलम्बनेन सहान्तरयोगं कृत्वा तात्कालिके स्थितिदले प्रागुक्तेन विधिना देयं शोध्यं वा। तत् स्फुटतिथ्यान्तादपास्य पुनरप्यर्कस्तात्कालिकः कर्त्तव्यः। तस्माल्लग्नं वित्रिभं कृत्वा तस्माद् भूयोऽपि वित्रिभलग्नेति पुरःसर-कर्म्मणा लम्बनं कार्य्यम्। तन्मध्यग्रहणिकस्थितिदलेन सहान्तरयोगं वा कृत्वा तात्कालिके स्थितिदले यथोक्तेन विधिना धनमृणं वा कार्य्यम्। एवं तावत् कार्य्यम् यावत् स्थित्यर्द्धं स्थिरं भवति। लम्बनं तत् प्रग्रहणिकं स्फुटं स्थित्यर्द्धं भवति। तल्लम्बनसंस्कृतात्तिथ्यन्तादपास्य प्रग्रहणकालः स्फुटो भवति। तेन प्रग्रहणिकस्फुटतिथ्यर्द्धेनार्कचन्द्रराहुभुक्तयः संगुण्य षष्ट्या विभज्यावाप्तकलादिफलेनार्कचन्द्रावूनोकार्य्यौ राहुस्वाधिकः कार्य्यः। एवं कृतेऽर्कचन्द्रराहवः प्रग्रहणकालिकाः स्फुटा भवन्ति। तस्मात् प्रग्रहण-कालिकाद् वित्रिभलग्नाद् वित्रिभलग्नोपक्रमविक्षेपाभ्यांशयुतिविश्लेष-भागाः कार्य्याः। तेभ्यो जीवा त्रयोदशगुणा खाब्धिहृतेत्यवनतिः कार्य्या। ततः प्रग्रहणिकाच्चन्द्रात् प्रग्रहणिकेन पातेन विक्षेपः कार्य्यः। ततस्तयोरेक-दिक् योगं भिन्नदिक् वियोगं कृत्वा स्फुटप्रग्रहणिकविक्षेपो भवति। एवं प्रग्रहणे। अथ मोक्षो मध्यग्रहणिकस्फुटतिथ्यन्ते मोक्षोपकरणस्थित्यर्द्धमसकृत् स्थिरीभूतं दत्त्वा तस्मिन् कालेऽर्कं तात्कालिकं कृत्वा स्फुटतिथ्यन्तं मोक्ष-स्थितिदलेन युतमिष्टकालं परिकल्प्य विप्रश्नोक्तेन विधिना लग्नं कार्य्यम्। तद्वित्रिभं कृत्वा तस्माद्वित्रिभलग्नेति पुरःसरकर्म्मणा लम्बनं कार्य्यम्। तद् यदि मध्यग्रहणिकलम्बनादधिकं भवति उभे अपि धनगते मध्यमोक्ष-लम्बने भवतः। तदा तयोर्मध्यमोक्षलम्बनयोरन्तरं कृत्वा तात्कालिके स्थितिदले देयम्। अथ तयोर्धनैकत्वेऽपि मौक्षिकमृणं स्यात्। ततस्तयोरन्तरे

ज्ञात्वा तेनान्तरेण तात्कालिकं स्थित्यर्द्धं हीनं कार्य्यम्। अथ मोक्षमध्ययोर्लम्बने ऋणगते भवतः। मौक्षिकं चोनं भवति। तदा तन्मध्यान्तरेण स्थितिदलं युतं कार्य्यं तात्कालिकम्। अथ ऋणैकत्वेऽपि मोक्षलम्बनमधिकं भवति मध्यलम्बनात् तदा मध्यान्तरेण हीनं स्थितिदलं कार्य्यम्। अथ तयोर्भेदः स्यात्। मध्यलम्बनमृणगतं मौक्षिकं च धनगतं तदा तयोर्लम्बनयोरैक्यं ज्ञात्वा तात्कालिके स्थितिदले देयम्। एवं कृते मौक्षिकं स्फुटस्थित्यर्द्धं भवति। तेन स्थित्यर्द्धेनार्कस्तात्कालिकः कार्य्यः। तत्र स्फुटतिथ्यन्ते दत्त्वा तदिष्टकालं परिकल्प्य तस्माल्लग्नं ज्ञात्वा तद्वित्रिभं ज्ञात्वा तस्माद्वित्रिभलग्नेति पुरःसरकर्म्मणा पुनर्लम्बनं कार्य्यम्। तत्र मध्यलम्बनेन सहान्तरयोगं वा ज्ञात्वा प्रागुक्तेन विधिना धनमृणं वा कार्य्यम्। तेन स्थितिदलेन भूयोऽपि तिथ्यन्तमधिकं ज्ञात्वार्कस्तात्कालिकः कार्य्यः। ततस्तदिष्टकालं परिकल्प्य तस्माद्वित्रिभलग्नेति पुरःसरकर्म्मणालम्बनं कार्य्यम्। तस्य भूयोऽपि मध्यलम्बनेन सहान्तरं योगं वा ज्ञात्वा यथोक्तेन विधिना तात्कालिके स्थितिदले देयं शोध्यं वा। एवं भूयोभूयस्तावत् कार्य्यं यावत् लम्बनं स्थित्यर्द्धं च स्थिरं भवति। तन्मौक्षिकं स्फुटं स्थित्यर्द्धं भवति। तत्र स्फुटतिथ्यन्ते संयोज्य मोक्षकालः स्फुटो भवति। ततस्तेन स्थित्यर्द्धेनार्कचन्द्रराहुभुक्तयः संगुण्य षष्ट्या विभज्यावाप्तफलेनार्कचन्द्रावधिकौ कार्य्यौ। राहुरूनः कार्य्यः। एवं कृते मौक्षिकाः स्फुटा ग्रहाः भवन्ति। ततो मौक्षिकाद् वित्रिभलग्नादपक्रमविक्षेपांशयुतिविशेषभागाः कार्य्याः। तेभ्यो ज्या त्रयोदशगुणा खाब्धिहृतेत्यवनतिर्भवति। ततो मोक्षकालिकाच्चन्द्रात् तात्कालिकेन पातोनचन्द्रज्येत्यादिना विक्षेपः कार्य्यः। ततस्तयोरेकदिक् योगो भिन्नदिक् वियोगं ज्ञात्वा मोक्षकालिकः स्फुटविक्षेपो भवति। एवं मोक्षम्। अथ निमीलनम्। स्फुटमध्यग्रहणिकातिथ्यन्तात् निमीलनमर्द्धार्द्धं शोध्यार्कस्तात्कालिकः कार्य्यः। तद्विमर्द्धार्द्धहीनं स्फुटतिथ्यन्तमिष्टकालं परिकल्प्य त्रिप्रश्नोक्तविधिना लग्नं कार्य्यम्। तद्वित्रिभं ज्ञात्वा तस्माद्वित्रिभलग्नेति पुरःसरकर्म्मणालम्बनं कार्य्यम्। तस्य मध्यलम्बनं कार्य्यम्। तस्य मध्यलम्बनेन सह प्रग्रहणोक्तेन विधिना तयोरैक्यान्तरं ज्ञात्वा तेन विमर्द्धार्द्धं संस्कृत्यैवमसकृद्विमर्द्धार्द्धसंस्कृतं स्फुटं निमीलनकालिकं भवति। तेन विमर्द्धार्द्धेनार्कचन्द्रराहवस्तात्-

कालिकाः कार्य्याः। ततो निमीलनविक्षिभात् यथोक्तेन विधिनावनतिः कार्य्या। तेन निमीलनकालिकेन पातेन विक्षेपः कार्य्यः। तयोरन्तरमैक्यं समान्यदिशोः कृत्वा स्फुटोनिमीलनकालिको विक्षेपो भवति। तद् विमर्द्दार्धं स्फुटतिथ्यन्तादपास्य निमीलनकालः स्फुटो भवति। एवं निमीलनमिति। अथोन्मीलने। स्फुटमध्यग्रहणिके तिथ्यन्ते उन्मीलनमर्द्दार्धं दत्वार्कं च तात्कालिकं कृत्वा तद्विमर्द्दार्धयुतस्फुटतिथ्यन्तमिष्टकालं परिकल्प्य त्रिप्रश्नोक्त विधिना लग्नं कार्य्यम्। तद्वित्रिभम्। तस्माद् वित्रिभलग्नेति पुरःसरकर्म्मणालम्बनं कार्य्यम्। तस्य मध्यमलम्बनेन सहान्तरयोगं वा कृत्वा मोक्षलम्बनोक्तेन धनर्णविधानेन उन्मीलनमर्द्दार्धेन न्यूनं वा कार्य्यम्। एवमसकृत् संस्कृतं विमर्द्दार्धं उन्मीलनकालिकं स्फुटं भवति। तेनार्कचन्द्राह्वदस्तात्कालिकाः कार्य्याः। ते उन्मीलनकालिकाः स्फुटाः भवन्ति। ततः स्फुटतिथ्यन्ते तद् विमर्द्दार्धं दत्वोन्मीलनकालः स्फुटो भवति। उन्मीलनवित्रिभादवनतिः कार्य्या। उन्मीलनचन्द्राद् विक्षेपः कार्य्यः। तयोः समान्यदिशोर्योगान्तरं वा कृत्वा उन्मीलनविक्षेपः स्फुटो भवति।

अथोदाहरणम्। तद् यथा। मध्यग्रहस्फुटतिथ्यन्तः २६।२८। अस्मात् प्रग्रहणिकमुपकरणस्थित्यर्द्धमिदम् २।४० संशोध्य शेषम् २३।५८। तदिष्टकालं परिकल्प्यार्कस्तात्कालिको जातः ११।१२।४०।३५। अस्माद् यथोक्तेन विधिना लग्नमिदं ४।१८।३७।३५ तद्वित्रिभं १।१८।३७।३५ एतस्मात् क्रान्तिखण्डा १०५८ एता अक्षादस्मात् १८।१२। भिन्नदिकत्वाद्विशोध्य शेषं ७५४ एतद् भक्तयाद्यूनं ४६४६। अस्य ज्या १४६ अनया त्रिज्यार्द्धकृतिं विभज्याप्तं ३८ अनेन विषिभलग्नार्कान्तरज्यामिमां १२६ विभज्यावाप्तं घटिकादि फलं लम्बनं चेदं ३।२२ तन्मध्यलम्बनादस्मात् ३।४८ असमुभेऽपि धनागते। तयोरन्तरं कृत्वा तात्कालिके स्थितिदले देयान्तरमिदं ०।२६ स्थितिदले देयम् २।५२ अनेन स्थित्यर्द्धेनार्कस्तात्कालिकीकृतो जातः। स्फुटतिथ्यन्तं चोनीकृतं जातं २३।४२। एतदिष्टकालं परिकल्प्य त्रिप्रश्नोक्तेन विधिना लग्नं कृतं यावत् त्रिरीभूतं १।१७।२६।० अस्माद्वित्रिभलग्नेति लम्बनं कृत्वा जातं ३।२२ अस्य मध्यलम्बनेन ३।४८ अनेनान्तरं जातम् ०।२६ एतदुभयोरपि धनगतत्वात् प्रग्रहणोर्द्धत्वाच स्थितिदलेऽस्मिन् संयोज्य जातम्। स्फुटग्रहणिकं

स्थित्यर्धं २।५६। एतत् स्थिरीभूतं एतन्मध्यग्रहणिकतिथ्यन्तादस्मात् २६।२८ संशोध्य प्रग्रहणकालः स्फुटो जातः २३।४३। अनेन स्फुटस्तिथ्यन्तार्कचन्द्रराहवः तात्कालिकीकृताः प्रग्रहणकालिकाः जाताः।

| | | |
|---|---|---|
| ११ | ११ | ५ |
| १२ | १२ | १६ |
| ४० | ५० | ४३ |
| ८ | ३२ | ३० |

अस्मिन् काले वित्रिभमस्मात् क्रान्तिरुत्तरा जाता १०४० विक्षेपश्च दक्षिणः १२३५। स्वाक्षांशा ३०।१२। एतेषाम् त्रयाणामपक्रमभिन्नदिशं विशोध्य विक्षेपाक्षयुतिविशेषं १००७। एतद्युतिविशेषमस्मात् ज्या ४३। एतां त्रयोदशभिः संगुण्य चत्वारिंशता विभज्यावाप्तं लिप्तादि १४।४। एष्यवनतिर्दक्षिणा। युतिविशेषवशात् प्रग्रहणिकाच्चन्द्रात् प्रग्रहणिकेनानेन विक्षेपमानीतम् १०।१८। अनयोर्भिन्नदिकत्वात् वियोगं कृत्वा प्रग्रहणिकः स्फुटविक्षेपो जातः ४।६। एष चन्द्रविक्षेपश्चाधिकत्वात् उत्तरपरिलेखे उपयोग्य इति। एवं प्रग्रहणं मोक्षोदाहरणं तद् यथा। मध्यग्रहणिकः स्फुटतिथ्यन्तः २६।२८। अस्मिन् मौक्षिकमुपकरणस्थित्यर्धं २।४।२ संयोज्य जातं *२८।३२ अस्मिन् कालेऽर्कस्तात्कालिकः कृतो जातः ११।१२।४५।४३। स्थित्यर्धयुतं स्फुटतिथ्यन्तमिष्टकालं परिकल्प्य त्रिप्रश्नोक्तेन विधिना लग्नं कृतं जातमिदम् ५।१६।१८।० एतद्वित्रिभं २।१६।१८।०। अस्मात् क्रान्तिरुत्तरा १३८१। एतां स्वाक्षादस्मात् १८।१२ विशोध्य शेषं ४२१। एतन्नवतेः संशोध्य ज्या १४८। अनया त्रिज्यार्धकृतिं विभज्यावाप्तं लिप्तादिफलं तच्चेदम् ३८। अनेन वित्रिभलग्नान्तरज्यामिमां १४८ विभज्यावाप्तं लिप्तादिफलं तच्चेदम् १२।४५। एतन्मध्यग्रहणिकलम्बनादस्मात् ३।४८ अधिकं हे अपि मध्यलम्बने धनगते मोक्षे वाधिकमेतयोर्मध्यान्तरेण स्थितिदलयुक्तमिदं तात्कालिकं जातम् २।४७। एतन्मध्यग्रहणिके तिथ्यन्तेऽस्मिन् २६।२८ संयोज्य जातम् २८।१६। अस्मिन् कालेऽर्कस्तात्कालिको जातः।

११ अस्मात् यथोक्तेन विधिना वित्रिभं २।६।३५।०। अस्मा-
१२ द्वित्रिभलग्नेति पुरःसरकर्मणा लम्बनम् ३।४५। एतत् स्थिरी-
४५
४८ भूतम्। अस्य मध्यग्रहणिकलम्बनेन ३।४८ सहान्तरेण कृते

जातम् ०।५। एतन्मध्यान्तरम्। उ ॅ अपि धनगते मौक्षिकं चाधिकम्। एता एवैतन्मध्यान्तरयुक्तं जातम्। मौक्षिकं स्फुटस्थितिदलमिदं २।४७। अनेनार्कचन्द्रराहवः। तात्कालिकाः मौक्षिका जाताः। इमे—

| | | |
|---|---|---|
| ११ | ११ | ५ |
| १२ | १४ | १६ |
| ४५ | ३ | ४२ |
| १८ | २१ | १४ |

एतत् स्थित्यर्द्धं मध्यग्रहणिके तिथ्यन्ते संयोज्य जातः स्फुटो मोक्षकालिकतिथ्यन्तः २८।२६। मौक्षिकं वित्रिभम् २।१६।३३।०। अस्मादानीतावनतिईक्षिणा मौक्षिकाच्चन्द्रान्मौक्षिकेन पातेन विक्षेपः कृतो जातः १२।२८ अनयोर्भिन्नदिशोर्वियोगे कृते मौक्षिकः स्फुटविक्षेपो जातः २।४८ एष परिलेखे उपयोग्य इति। एवं मोक्षे। अथ निमीलनोदाहरणम्। विमर्द्दार्द्धस्योदाहरणावाप्तिः। अथ चेद् भवति तदा प्रकरणोक्तेन लम्बनविधानेन विमर्द्दार्द्धं लम्बनेन संस्करणीयमिति। मौक्षिकं लम्बनोक्तेन विधानेनोन्मीलनमर्द्द ॅम्। स्वलम्बनेनासकृत्कर्मणा संस्करणीयमिति। एवं प्रग्रहणमध्यग्रहणमोक्षकालाः स्फुटा जाताः।

| | | |
|---|---|---|
| २३ | २६ | २८ |
| ४२ | ३८ | २६ |

अस्मिन् दिने दिनप्रमाणम् २८।४२। एतस्मात् मोक्षकालात् २८।२६ संशोध्य शेषम् ०।४४। एतावति काले शेषे सूर्य्यास्तमयात्। तस्माद् ग्रस्तास्तमिदं ग्रहणम्। अभीष्टग्रासमुदाहरिष्यामः। तथा चोक्तं ब्राह्मे

प्राग्वल्लम्बनमसकृत् तिथ्यन्तात् स्थितिदलेन हीनयुतात्।
अधिकोनं तन्मध्याद्दृणयोरूनाधिकं धनयोः।
यद्यधिकं स्थित्यर्द्धं तदान्तरेणान्ययोनमृणमेकम्।
अन्यद् धनं तदैक्येनाधिकमेवं विमर्द्दार्द्धं॥

अथ स्वल्पेन प्रयोगेण स्थित्यर्द्धविमर्द्दार्द्धे स्फुटीक्रियते। तद् यथा—स्फुटतिथ्यन्तादुपकरणस्थित्यर्द्धं संशोध्यार्कं च तात्कालिकं कृत्वा लग्नं कार्य्यम्। तस्माद्वित्रिभलग्नेति पुरःसरकर्मणा लम्बनं कार्य्यम्। तल्लम्बनं करणागते तिथ्यन्ते तात्कालिकेन स्थित्यर्द्धेन यद्दृणगतं तद्दृणं कार्य्यम्। अथ

धनगतं तदा धनमिति। एतन्मध्यग्रहणोक्तन्यायेन सूर्य्ये ऋणमधिके धनमूने विविभलग्नादिति। एवमसकृत्कर्म्मणा कार्य्यम्। तस्मिन् करणागते तिथ्यन्ते तात्कालिकतिथ्यन्तस्थित्यर्द्धोने लम्बनं तावत् कार्य्यं यावत्तिथ्यन्तं स्थिरं भवति। स प्रग्रहणिकः स्फुटतिथ्यन्तो भवति। अथ मोक्षे स्फुटतिथ्यन्ते मौक्षिकानुपकरणस्थित्यर्द्धं संयोज्य तदिष्टकालं परिकल्प्यार्कं च तात्कालिकं कृत्वा लग्नं कार्य्यम्। तद्विविभं कृत्वा तस्माद्विविभलग्नेतिपुरःसरकर्म्मणा गते तिथ्यन्ते तात्कालिकस्थितिदलयुते ऋणे धने वा मध्यग्रहणोक्तेन विधिनाऽसकृत् कर्म्मणा कार्य्यम्। ऋणमूने धनमधिके विविभलग्ने तिथावसकृत्। इति तावत् कार्य्यं यावल्लम्बनानामविशेषं तिथ्यन्तं च भवति स्फुटो मोक्षकालो भवति। प्रग्रहणमध्यग्रहणतिथ्यन्तयोर्यदन्तरं तत् प्रग्रहणकालिकं स्फुटं स्थित्यर्धं भवति। अथ निमीलने स्फुटतिथ्यन्तात् निमीलनमर्द्धार्द्धं विशोध्य तदिष्टकालं परिकल्प्य विविभलग्नं कार्य्यम्। तद्विविभलग्नेति पुरःसरकर्म्मणा लम्बनं कार्य्यम्। तत् करणागते तिथ्यन्ते विमर्द्दार्धोने ऋणं धनं वा कार्य्यम्। मध्यग्रहणोक्तेन विधिना ऋणमधिके धनमूने इति तावत् कार्य्यं यावल्लम्बनमविशेषं भवति। तिथ्यन्तश्च सस्फुटनिमीलनकालो भवति। अथोन्मीलनम्। तद् यथा। मध्यग्रहणतिथ्यन्ते विमर्द्दार्द्धं दत्त्वा तस्मिन् काले लम्बनम्। तं लम्बनं करणागते तिथ्यन्ते विमर्द्दार्द्धयुक्तेन धनमृणं वा कार्य्यम्। तन्मध्यग्रहणोक्तेन विधानेन ऋणमधिके धनमृणे विविभलग्नादिति। एवं तावत् कार्य्यं यावल्लम्बनमविशेषं भवति। तिथ्यन्तश्च। स उन्मीलनकालः स्फुटो भवति। ततो निमीलनमध्यग्रहणतिथ्यन्तयोर्यदन्तरं तन्निमीलनमध्यग्रहणतिथ्यन्तयोर्यदन्तरं (?) तदुन्मीलन-विमर्द्दार्द्धम्। अथोदाहरणम्। तद् यथा स्फुटतिथ्यन्तः २६।८ अस्मादुपकरणस्थित्यर्द्धमिदम् २।४० संशोध्य शेषं २३।५८ अस्मिन् अर्कस्तात्कालिकः ११।१२।४०।०। स्थित्यर्धोनस्फुटतिथ्यन्तमिष्टकालं परिकल्प्य लग्नं कृतम् ४।१८।३७।० तद्विविभं कृत्वा तस्माद्विविभलग्नेति पुरःसर-कर्म्मणालम्बनमानीतम् ३।२२। एतत् धनगतं करणागत-तिथ्यन्तमिदं २२।५०। एतस्मात्कालिकस्थित्यर्द्धोनं जातम् २०।१०। अस्मिन् धनागतत्वाल्लम्बनमिदम् ३।२२। धनं कृत्वा जातः प्रग्रहणिकस्फुटतिथ्यन्तः

२३।४२। अस्मिन् काले पुनरप्यर्कस्तात्कालिको जातः ११।१२।४० अस्मादिद्विभलम्नम् ११।१७।१२।४८ अस्मादिद्विभलग्ने इति कर्मेणालम्बनम् ३।३२। एतत् करणागते तिथ्यन्तः तात्कालिक-स्थित्यर्द्धेनास्मिन् २०।१०। धनं कृत्वा जातः प्रग्रहणिकस्फुटतिथ्यन्तः २३।४२ एषोऽधिकेऽधिकम्। अन्तरत्यागलम्बनविधानेन संस्कृतेन प्रग्रहणिकेन सदृशमिति। ततो मध्यग्रहणिकतिथ्यन्तः २६।३८ अनयोरन्तरम् २।५७। एतत् प्रग्रहणिकं स्फुटं स्थित्यर्धम्। प्रागुदाहृतेन सदृशमेव। एवमन्यत्राप्युदाहरणीयमिति। निमीलनोन्मीलनमोक्षेष्टग्रासस्येति। एतदुपदेशगम्यं मया भिन्नत्वेन प्रोक्तं मुखेन स्थित्यर्द्धविमर्द्दार्द्धयोः स्फुटीकरणम्। अथ मध्यलम्बनं भवति। तदा प्रग्रहणिकं लम्बनं तन्मध्यान्तरं परिकल्प्य तात्कालिक उपकरणस्थित्यर्द्धं देयम्। तत् स्फुटं प्रग्रहणिकं स्थित्यर्द्धं भवति। अथ मध्यलम्बनाभावो भवति। तदा मोक्षलम्बनं तन्मध्यान्तरं परिकल्प्य तात्कालिके मौक्षिकोपकरणस्थित्यर्द्धं देयम्। तत् स्फुटं प्रग्रहणिकं स्थित्यर्द्धं भवति। अथ मोक्षलम्बनाभावो भवति। तदा मध्यलम्बनं मौक्षिके उपकरणस्थित्यर्द्धं देयम्। तन्मौक्षिकं स्फुटं स्थित्यर्द्धं भवति। विमर्द्दार्द्धेऽप्येवं कर्त्तव्यमिति।

अस्मिन्नार्थाहितये गणकानामूनो राशिर्भवति। तथा चैतस्मिः प्रदर्शितम्। प्रथमं वाक्यार्थेन द्वितीयं करणेन तृतीयमुदाहरणेन। मया यत्किञ्चिदयुक्तमुक्तं तत्सर्वं गणकैः क्षमणीयमिति।

अथेष्टग्रासो व्याख्यायते। तत् यदा प्रग्रहणाद् गते कालेऽभीष्टग्रास-प्रश्नः। तदा सकालः प्रग्रहणिकः स्फुटस्थित्यर्द्धाद् विशोध्य शेषं वीष्टस्थिति-दलकालो भवति। अथ मोक्षादर्वाक् तदा मौक्षिक-स्फुटस्थित्यर्द्धाद् विशोध्य शेषं वीष्टस्थितिदलकालो भवति। तेन वीष्टस्थितिदलकालेन रविशशिनोः भुक्त्यन्तरं संगुण्य षष्ट्या विभज्यावाप्तं भुजलिप्ता भवन्ति। ताश्च तात्कालिकेन स्थितदलेन संगुण्य यदि प्रग्रहणाद् गते काले प्रश्नः तदा स्फुट-प्रग्रहणिकेन स्थित्यर्द्धेन विभजनावाप्ताः स्फुटा भवन्ति। अथ मोक्षात् शेषकाले प्रश्नः। तदा मौक्षिकेन स्फुटेन स्थित्यर्द्धेन विभजनावाप्तं तयोर्योगमूलं कार्यम्। तेन रविचन्द्रप्रमाणयोगदलमूनं कृत्वा तात्कालिक-स्फुटग्रासो भवति।

अथोदाहरणम्। तद् यथा। अस्मिन्नेव मोक्षादर्वाक् चतुश्चत्वारिंशत्पलकैः आदित्यास्तमनम्। तस्मादेवं प्रश्नः चतुश्चत्वारिंशत्पलकैः कियान् ग्रासो भविष्यतीति। तद् यथा मोक्षस्थित्यर्द्धमिदं २।४८। अस्मात् प्रश्नपलकान् ४४ संशोध्य शेषं २।३। एतदीष्टस्थितिदलं अनेन भुक्त्यन्तरमिदम् ७०।५। गुणितं जातम् १४४५।१५। एतत् षष्ट्या विभज्यावाप्तं लिप्तादिफलं २४।५ एष भुजः शशिवदानीता। एतस्मात्कालिकोपकरणं स्थित्यर्द्धेनानेन २।२४ संगुण्य मोक्षस्थित्यर्द्धेनानेन २।४७ विभज्यावाप्तं स्फुटो भुजः २३।११। ततस्तेन वीष्टस्थितिदलेन ३।२ अर्कचन्द्रराहवः मध्यग्रहणिकास्तात्कालिका जाताः।

| | | |
|---|---|---|
| ११ | ११ | ५ |
| १२ | १३ | १५ |
| ४५ | ५४ | ४३ |
| ० | ० | ० |

अस्मिन् काले वित्रिभलग्नं २।१२।४५ अस्मादवनतिर्दक्षिणा १०।३ ततस्तात्कालिकात् चन्द्रात् तात्कालिकेन राहुणा विक्षेपः १३ २६। एषस्तात्कालिकविक्षेपः अनयोरन्तरे कृते स्फुटविक्षेपः ३।२३। अस्य कृतिः १०।१८। भुजवर्गः ५४५। अनयोर्योगः ५५६। अस्य मूलं २३।२५। एष कर्णः मानैक्यार्द्धादस्मात् ३१।५० विशोध्य शेषं ८।१५ एतद्ग्रासलिप्ता शेषा आदित्यास्तमयकाले। एवमन्यत्राप्युदाहरणीयमिति।

अथ ग्रासात् कालानयनं व्याख्यायते। तत्र यावन्तो ग्रासलिप्ता प्रश्ने भवन्ति तावन्तो रविचन्द्रमानैक्यार्द्धाद् विशोध्य शेषस्य कृतिः कार्य्या। तस्याः कृतेः मध्यग्रहणिकविक्षेपकृतिं विशोध्य शेषस्य पदं ग्राह्यम्। यदि प्रग्रहणयोर्मध्ये प्रश्नः तदा प्रग्रहणिकेन स्फुटस्थित्यर्द्धेन संगुण्य तात्कालिकेन विभजेत्। यदवाप्तं फलं तत् षष्ट्या संगुण्य भुक्त्यन्तरेण विभज्यावाप्तं फलं घटिकादिर्भवति। तेन कालेनार्कचन्द्रराहवः मध्यग्रहणिकास्तात्कालिकाः कार्य्याः। तेभ्यः स्फुटविक्षेपः। तस्य विक्षेपस्य कृतिमिष्टग्रासोनमानैक्यार्द्धकृतेः संशोध्य शेषमूलं तात्कालिकेन स्थित्यर्द्धेन विभक्ते स्फुटस्थित्यर्द्धेन प्रग्रहणिकेन मौक्षिकेन वा हतमवाप्तं षष्टिघ्नं भुक्त्यन्तरेण विभज्यावाप्तं घटिकादिफलम्। तेन फलेनार्कचन्द्रराहवस्तात्कालिकी-

कृता:। तेभ्य: स्फुटविक्षेप:। तस्य कृति:। इष्टग्रासोनमानैक्यार्द्धकृते: संशोध्य शेषमूलम्। स्फुटस्थित्यर्द्धेन मध्यग्रहणिकेन मौक्षिकेन वा हतं तात्कालिकेन स्थित्यर्द्धेन विभक्तमवाप्तं षष्टिघ्नं भुक्त्यन्तरेण विभज्यावाप्तं घटिकादिफलम्। एवं तावत् कार्य्यं यावत् घटिकादिफलमविशेषं भवति। ततो यदि प्रग्रहणात् गते प्रश्न: ततस्तत् फलं प्रग्रहणिक-स्थित्यर्द्धादपास्य प्रश्नग्रासलिप्तानां कालो भवति। अथ मोक्षात् पूर्व्वेण प्रश्न:। तदा मोक्षस्फुटस्थित्यर्द्धादपास्य प्रश्नग्रासलिप्तानां कालो भवति। तद् यथा। अष्टानां ग्रासलिप्तानां सपादानां कियत्काल इति प्रश्न:। इष्टग्रासलिप्ता: ८।१५ एता मानैक्यार्द्धादस्मात् ३१।५० विशोध्य शेषं २३।३५ अस्य कृति: ५५५।५०। अस्या मध्यग्रहणिक-विक्षेपकृतिरियम् १६।२४ विशोध्य शेषम् ५३८।२७। अस्य मूलम् २३।१३। एष प्रश्नो मोक्षादर्वाक् तस्मान्मौक्षिकस्थित्यर्द्धेनानेन २।४७ संगुण्य जातं ५४।३८ तात्कालिकेन स्थित्यर्द्धेनानेन २।४२ विभज्यावाप्तम् २३।५६ एतत् षष्ट्या संगुण्य जातम् १४३६। अस्य भुक्त्यन्तरेणानेन ७०५ भागे हृते घटिकादिफलं २।२ अनेनार्कचन्द्रराहवो मध्यग्रहणिकास्तात्कालिकी-कृता:

| | | |
|---|---|---|
| ११ | ११ | ५ |
| १२ | १३ | १६ |
| ४५ | ५४ | ४३ |
| ० | ० | ० |

त्रिभिभं तात्कालिकम् २।१२।३८।४८ अस्मादवनतिर्दक्षिणा १०।३। तात्कालिकाच्चन्द्राच्च विक्षेप: १३।१६ अनयोरन्तरे कृते स्फुटविक्षेप: ३।२३ एष तात्कालिके विक्षेप अस्य कृतिमिमाम् ११ इष्टग्रासोन-मानैक्यार्द्धकृतेरस्या: ५५५ संशोध्य जातम् ५४४ अस्य मूलम् २३।२१ एतत् स्फुटमौक्षिकस्थित्यर्द्धेनानेन २।४७ संगुण्य तात्कालिकेन स्थित्यर्द्धेनानेन २।४४ विभज्यावाप्तम् २४।४ एतत् षष्ट्या संगुण्य भुक्त्यन्तरेणानेन ७०५ विभज्यावाप्तं घटिकादिफलम् २।३ एतत् स्थिरीभूतम्। अनेन मोक्षस्थित्यर्द्ध-मिदम् २।४७ ऊनीकृतं शेषम् ०।४४ एषोऽष्टानां ग्रासलिप्तानां सपादानां मौक्षिकात् पूर्व्वेण गतकाल:। एवमत्राप्युदाहरणीयमिति। एवं च ग्रास-

कालो यस्मिन् शशिवत् यथोक्ताः। तथा च न सिध्यन्ते किन्त्वनेन प्रकारेण स्फुटौ भवतः। वलनांशाः शशिवत् कार्य्याः। किन्तु विशेषः तत्र चन्द्रमा ग्राह्यः। इह तु पुनरादित्यो ग्राह्यः। शेषं सामान्यमेव। आदित्यग्रहणं चोत्तरे सप्रपञ्चं सपरिलेखं सोदाहरणं व्याख्यास्यामः।

इति भट्टमधुसूदनसुत-चतुर्व्वेदपृथूदकस्वामिकृते
खण्डखाद्यविवरणे सूर्य्यग्रहणाध्यायः पञ्चमः॥

---

## अथ उदयास्ताधिकारः

नारायणं सुरश्रेष्ठं नत्वाहं प्रभुमव्ययम्
उदयास्तमनाध्याये वक्ष्ये भाष्यं परिस्फुटम् ॥

अथातो उदयास्तमनाध्यायो व्याख्यायते। तत्र च ग्रहाणां द्विविधावुदयास्तमयौ। एकः प्रतिदैवसिकः। स च सर्व्वेषां च ग्रहाणां पूर्व्वार्द्धे उदयः पश्चार्द्धेऽस्तमयः। द्वितीयः आदित्योपसर्पणास्तमयः। तत्समीपनिर्गमादुदयः। तत्र स्फुटार्कभुक्तेः सकाशात् यस्य ग्रहस्य स्फुटभुक्तिरधिका भवति स शीघ्रगतिः ग्रहः। यस्यार्कस्फुटभुक्तेः सकाशात् नित्यमधिका तेषां पश्चार्द्धे उदयः पूर्व्वार्द्धेऽस्तमयः। मन्दग्रहस्य तु पूर्व्वार्द्धे उदयः पश्चार्द्धेऽस्तमयः। बुधशुक्रौ यदा वक्रगतौ भवतः तदा तयोरर्कभुक्तेः सकाशात् ऊना स्फुटभुक्तिर्भवति। तेन तौ मन्दौ भवतः। तदा तयोः पूर्व्वार्द्धे उदयः पश्चार्द्धेऽस्तमयः। बुधशुक्रौ वक्रगतौ भवतः। तथा तयोरर्कभुक्तेरधिका स्फुटभुक्तिर्भवति। तदा तौ शीघ्रौ। तेन तयोः पश्चार्द्धे उदयः पूर्व्वार्द्धेऽस्तमयः। भौमजीवसौराणां नित्यमर्कस्फुटभुक्तेरूना स्फुटभुक्तिः तेन मन्दाः। तस्मात्तेषां नित्यं पूर्व्वार्द्धे उदयः पश्चार्द्धेऽस्तमयः। ततो यस्य ग्रहस्य पूर्व्वार्द्धे उदयोऽस्तमयो वा क्रियते तत्र च दृक्कर्म्मसत्कार्य्यद्वयं क्रियते। तस्मिंश्च दृक्कर्म्मणि विक्षेपः उपयुज्यते। तदानयनं समागमाध्याये वक्ष्यति। मया चोपयोगित्वादिहैवाभिधीयते। विक्षेपानयने च कर्णः उपयुज्यते तस्मात् कर्णानयनमाह।

केन्द्रज्याऽन्त्यफलज्यागुणिता फलजीवया हृता कर्णः।

केन्द्रस्य ज्या केन्द्रज्या सा गुणिता कया उच्यते। अन्त्यफलज्यया अन्त्यं च फलमन्त्यफलम्। परमफलमित्यर्थः। तस्य ज्या अन्त्यफलज्या। फलजीवया हृता कर्णः। फलस्य जीवा फलजीवा। भवाप्तं कर्णो भवतीति वाक्यार्थः।

करणम्। यस्य ग्रहस्य पूर्व्वार्ते उदयोऽस्तमयो वा गण्यते सोऽर्कास्त-मनान्तिको मध्यमः स्वशीघ्रसहितः कर्त्तव्यः। ततः स्फुटीकार्य्यः। तस्मिन् स्फुटीक्रियमाणे यत् केन्द्रं तस्य जीवा कार्य्या। सा स्वकीयान्त्यफलज्यया संगुणनीया। चतुर्थे कर्म्मणि यत् शीघ्रफलं तस्य जीवा कृत्वा तया विभजेत्। लब्धं लिप्तादि कर्णो भवति। तत्र च सर्व्वेषां ग्रहाणां अन्त्यफलज्या स्थिरा तस्मात्तेषामन्त्यज्याः प्रदर्श्यन्ते। तत्र तावदन्त्यफलानि। कुजबुधजीवसित-सौराणां यथाक्रमेणेमानि

| कुज | बुध | जीव | शुक्र | शनि |
|---|---|---|---|---|
| १ | ० | ० | १ | ० |
| १० | ३१ | ११ | १६ | ६ |
| २० | ३० | ३० | १० | २० |

एतेभ्यो जीवास्ता यथा। षण्णवतिलिप्ता द्वाचत्वारिंशद्विलिप्ताः कुजस्यान्त्य-फलज्या। चतुःपञ्चाशल्लिप्ताः षड्विंशतिर्विलिप्ता बुधस्यान्त्यफलज्या। एकोनत्रिंशल्लिप्ताः चतुःपञ्चाशद्विलिप्ता जीवस्यान्त्यफलज्या। लिप्तानां शतमष्टाधिकं शुक्रान्त्यफलज्या। षोडशलिप्ता अष्टाविंशतिविलिप्ताः सौरान्त्य-फलज्या। अङ्केनापि लिख्यते।

| | | | | |
|---|---|---|---|---|
| ८६ | ५४ | २८ | १०८ | १६ |
| ४२ | २६ | ५४ | ० | २८ |

एता भौमादीनां परमशीघ्रफलजीवा। एवं यथा स्वकीयान्त्यफलज्यया स्वकीयचतुर्थकर्म्मणि केन्द्रज्यां संगुण्य चतुर्थशीघ्रस्वफलज्यया विभज्यावाप्तं लिप्तादि स्वान्त्यकर्णो भवति। तद् यथोदाहरणम्। शाकेऽस्मिन् ७८५ मासाः ७ तिथय १८। अस्मिन् दिने शुक्रस्य पश्चार्द्धोदयो गण्यते। तद् तथा। अर्द्धरात्रिकौ मध्यमौ देशान्तरसंस्कृतौ शीघ्रशुक्रौ

| | |
|---|---|
| ८ | ७ |
| ८ | २२ |
| २७ | २ |
| २ | ४६ |

एतौ पश्चार्द्धत्वादस्तमनान्तिकौ मध्यमावेव ८।८।२०।३३॥ ७।२१।४६॥३०. अस्मिन् काले स्फुटीकृतः शुक्रः। चतुर्थकर्म्मणि केन्द्रम् ०।२८।४६।४८

अस्मात् ज्या ७२ चतुर्थकर्मणि शीघ्रफलम् ११।५७।४० अस्मात् ज्या १२११० केन्द्रशेषम् ७२। अन्त्यफलज्या १०८ अनया ज्या गुणिता जाता ७७७६ एतास्चतुर्थफलज्ययानया ३१ विभज्याप्तम् २५० एव कर्णः। एवमन्येषामपि ग्रहाणामुदाहरणीयमिति। अथ यदा चक्रार्द्धे चतुर्थकेन्द्रं भवति चक्रे वा तदा कर्णानयनमाह।

## त्रिज्यान्त्यफलज्योना चक्रार्द्धे संयुता चक्रे।१।

त्रिज्यान्त्यफलजया ऊना त्रिज्यान्त्यफलज्योना। कदा उच्यते। चक्रार्द्धे शीघ्रकेन्द्रे सति। अन्त्यफलजया ऊनः कर्णो भवति। चक्रान्ते तु शीघ्रकेन्द्रे सति अन्त्यफलजया युतः कर्णो भवति। इति वाक्यार्थः।

करणम्। ग्रहे स्फुटीक्रियमाणे चतुर्थकर्मणि यत् केन्द्रं तस्मिन् राशिद्वादशकं च भवत्यंशादिरहितम्। तदा चतुर्थकर्मणि शीघ्रफलस्याप्यभावः। तदाभावे कर्णानयनं कथ्यते। त्रिजा स्वकीयान्त्यफलजया युता कार्या चक्रे चतुर्थे केन्द्रे सति स स्वान्त्यकर्णो भवति चक्रान्त्ये। अथ चक्रार्द्धे केन्द्रे कर्णाः स्थिराः। कुजबुधजीवसितसौराणां तद् यथा। त्रिपञ्चाशल्लिप्ता अष्टविंशतिविलिप्ताः कुजस्य चक्रार्द्धेऽन्त्यकर्णः। पञ्चनवतिलिप्ताः चतुर्विंशतिविलिप्ता बुधस्य चक्रार्द्धेऽन्त्यकर्णः। लिप्तानां शतं विंशत्यधिकं विलिप्ताः षट् जीवस्य चक्रार्द्धेऽन्त्यकर्णः। द्विचत्वारिंशल्लिप्ताः शुक्रस्य चक्रार्द्धेऽन्त्यकर्णः। लिप्तानां शतं त्रयस्त्रिंशदधिकं द्वात्रिंशद्विलिप्ताः सौरस्य चक्रार्द्धेऽन्त्यकर्णः।

| | | | | |
|---|---|---|---|---|
| ५३ | ९५ | १२० | ४२ | १३३ |
| २८ | २४ | ६ | ० | ३२ |

एवं भौमादीनां चक्रार्द्धेऽन्त्यकर्णाः प्रदर्श्यन्ते। लिप्तानां शतद्वयं षट्चत्वारिंशदधिकं द्वाचत्वारिंशद्विलिप्ता भौमस्य चक्रान्तेऽन्त्यकर्णः। लिप्तानां शतद्वयं चतुरधिकं षड्विंशतिविलिप्ता बुधस्य चक्रान्तेऽन्त्यकर्णः। लिप्तानां शतमेकोनाशीत्यधिकं चतुःपञ्चाशद्विलिप्ता गुरोश्चक्रान्त्यकर्णः। लिप्तानां शतद्वयमष्टपञ्चाशदधिकं शुक्रस्य चक्रान्त्यकर्णः। लिप्तानां शतं षट्षष्ट्यधिकमष्टाविंशतिर्विलिप्ताः शनैश्चरस्य चक्रान्त्यकर्णः।

| | | | | |
|---|---|---|---|---|
| २४६ | २०४ | १७९ | २५८ | १६६ |
| ४२ | २६ | ५४ | ० | २८ |

एते भौमादीनां चक्रान्त्यकर्णा इति। अथ भौमादीनां पातानयनमाह—

**कृतयमवसुरसदशकाः पातांशाः दशगुणाः कुजादीनाम्।**

कृताश्च यमौ च वसवश्च रसाश्च दशकं च कृतयमवसुरसदशकाः एते एव दशगुणाः सन्तः पातांशाः भवन्ति। केषामुच्यते। कुजादीनाम्। कुज आदिर्येषां ते कुजादयः तेषाम्। यथासंख्यं कुजबुधजीवसितसौराणां पातांशाः भवन्ति इति वाक्यार्थः।

करणम्। कृताश्चत्वारो दशगुणाश्च चत्वारिंशत् कुजस्य पातांशाः। यमौ द्वौ दशगुणौ विंशतिर्बुधस्य पातांशाः। वसवोऽष्टौ दशगुणा अशीतिर्जीवपातांशाः। रसाः षट् दशगुणाः षष्टिः शुक्रस्य पातांशाः। दशदशगुणाः शतं सौरपातांशाः। अंशानां त्रिंशता भागमपहृत्य राश्यादयो भौमादीनां पाताः।

| म | बु | बृ | शु | श |
|---|---|---|---|---|
| १ | ० | २ | २ | ३ |
| १० | २० | २० | ० | १० |
| ० | ० | ० | ० | ० |

अधुना भौमादीनां मध्यविक्षेपमाह।

**नवरविरसार्कमासा विक्षेपकला गुणा दशभिः ॥२॥**

नव च रवयश्च रसाश्चार्काश्च कश्चित् मासाश्च नवरविरसार्कमासाः। एते दशगुणाः सन्तः विक्षेपकला भवन्ति। एषां भौमादीनाम्। प्रकृतत्वात् इति वाक्यार्थः। करणम्। नव दशगुणा नवतिर्भौमस्य मध्यमविक्षेपकलाः रवयो द्वादश दशगुणा विंशत्यधिकं शतं बुधस्य मध्यमविक्षेपकलाः। रसाः षट् दशगुणाः षष्टिर्जीवस्य मध्यमविक्षेपकलाः। अर्का द्वादश दशगुणाः शतं विंशत्यधिकं सितमध्यमविक्षेपकलाः। मासा द्वादश ते दशगुणा विंशत्यधिकं शतं त्रिमानां शनैर्मध्यमविक्षेपः ८०।१२०।६०।१२०।१२०।

एता भौमादीनां मध्यमविक्षेपकलाः। केचित् परमविक्षेपा इति व्याख्याताः। तदिष्यवः कुतः। यदा च मध्यमविक्षेपात् स्वान्त्यकर्णोऽल्पः स्वान्त्यकर्णाश्च समलिप्तपातानां ज्याधिका तदा नित्यमेव स्वमध्यविक्षेपात् सस्फुटविक्षेपो भवति। अस्मात् परमविक्षेपा इत्युक्तम्। मध्यमविक्षेपा इति शोभनमिति।

अधुना स्फुटविक्षेपानयनमाह—

**स्वं स्वं विशोध्य पातं समलिप्तात् सौम्यशुक्रयोः शीघ्रात् ।
जीवाविक्षेपगुणा हृतान्त्यकर्णेन विक्षेपः ॥३॥**

स्वकीयं स्वकीयं पातं विशोध्य कुतः समलिप्तात् तात्कालिकात् । स्फुटग्रहादित्यर्थः । सौम्यशुक्रयोः शीघ्रात् तात्कालिकात् पातं विशोध्य शेषस्य ज्या विक्षेपगुणा स्वमध्यविक्षेपेण गुणनीयेत्यर्थः । हृता केन उच्यते । अन्त्यकर्णेन यदवाप्तं स्फुटविक्षेपो भवति ।

करणम् । भौमजीवसौराणां यदा पूर्व्वे उदयो गण्यते अन्यतमस्य । तदार्कोदयकालिकात् स्वकीयं पातं विशोध्य केन्द्रं भवति । अत्र समलिप्तिकग्रहणं तात्कालिकोपलक्षणार्थम् । यस्मात् तात्कालिको ग्रहः समलिप्तशब्देनोच्यते । अथ पश्चार्द्धे कुजगुरुसौराणामस्तमयं गण्यते । तदार्कास्तमनान्तिकात् स्फुटग्रहात् स्वीयं पातं विशोध्य केन्द्रं भवति । अथ बुधशुक्रयोः पूर्व्वार्द्धे उदयो वा गण्यते । तदा तयोरर्कोदयकालिकात् शीघ्रात् स्वपातं विशोध्य केन्द्रं भवति । अथ तयोः पश्चार्द्धे उदयोऽस्तमयो वा क्रियते । तदा तयोरर्कास्तमनान्तिकाच्छीघ्रात् स्वपातं विशोध्य केन्द्रं भवति । अन्यत्रापि यत्र कुत्रचित् विक्षेपः क्रियते । कुजगुरुसौराणामन्यतमस्य तात्कालिकस्फुटग्रहात् पातं विशोध्य केन्द्रं कार्य्यम् । अथ बुधशुक्रयोस्तु तात्कालिकात् शीघ्रात् स्वपातं विशोध्य केन्द्रं कर्त्तव्यमिति । एवं यथोक्तेन विधिना केन्द्रं कृत्वा तस्मात् त्रिंशत्मनवेति जीवाभिर्जीवा कार्य्या । सा च स्वमध्यविक्षेपेण गुणनीया तात्कालिकेन स्वान्त्यकर्णेन विभज्यावाप्तं लिप्तादि स्फुटविक्षेपो भवति । स च मेषादिकेन्द्रे उत्तरः । तुलादिकेन्द्रे दक्षिणः । इति ।

उदाहरणम् । शुक्रस्य पश्चार्द्धोदयत्वात् शुक्रशीघ्रोऽस्तमनान्तिकोऽयं ८।८।२० अस्मात् शुक्रपातमिमं २।०।० संशोध्य जातम् ६।८।२६ एतत् केन्द्रम् । अस्माद् ज्या २४।२६ एषा भृगुमध्यमविक्षेपेणानेन १२० संगुण्य स्वान्त्यकर्णेनानेन २५० विभज्यावाप्तं लिप्तादिफलं ११।२८ । एष तात्कालिकः स्फुटविक्षेपः । केन्द्रस्य दक्षिणगोलत्वाद् दक्षिणा इति ।

अधुना दृक्कर्मद्वयस्य प्रथमं दृक्कर्म चाह—

**विक्षेपसत्रिराशिज्याघातादिन्द्वगाग्निभिर्लब्धकला:**
**विक्षेपायनसाम्ये शोध्या भेदे ग्रहे क्षेप्या: ॥४॥**

विक्षेपज्या······कया भण्यते। सत्रिराशिज्यया। सहत्रिराशिजया सहत्रिराशिभिर्वर्त्तत इति सत्रिराशि:। तस्मात् सत्रिराशिजया तया विक्षेपस्य ज्यातद्वध इत्यर्थ:। तस्माद्विक्षेपसत्रिराशिजयाघातात्। इन्द्वगाग्निभिर्लब्धकला:। इन्दुश्च अगाश्च अग्नयश्च। इन्द्वगाग्नयस्तै-रिन्द्वगाग्निभि: लब्धा: कला:। ता: कला विक्षेपायनसाम्ये शोध्या:। तयोर्विक्षेपायनयोर्यदा भेद: स्यात्तदा क्षेप्या:। क्व भवति स्फुटग्रहे एवं कृते दृक्कर्मसंस्कृतो ग्रहो भवति। इति वाक्यार्थ:।

करणम्। तात्कालिकं स्फुटग्रहं सत्रिभं कृत्वा तस्मात् त्रिंशत्सनवेति जीवाभिर्जीवा कार्या। सा तात्कालिकविक्षेपेण संगुण्य इन्द्वगाग्निभि-र्विभजेत्। एकसप्तत्याधिकैस्त्रिभि: शतैरित्यर्थ:। ३७१। लब्धं लिप्तादिफलं ग्रहे देयं शोध्यं वा कदेति भण्यते। तात्कालिकविक्षेपस्य सत्रिभस्यायनस्य च साम्ये शोध्या:। अदक्षराशित्रयात् स्फुटग्रहात्। भेदे तु अदक्षराशित्रये स्फुटग्रहे लिप्तादिफलं देयम्। अस्य विक्षेपस्य दिक्परिज्ञानं पूर्व्वमेव व्याख्यातम्। सत्रिराशेश्च मेषादावयनमुत्तरं तुलादौ दक्षिणमिति। अत्र केचित् व्याचक्षते मकरादावयनमुत्तरं कर्कादौ दक्षिणमिति तदयुक्तम्। यदन्यत्रा-प्याचार्य्यणोक्तं त्रिभयुग्... स्यायनांशैश्च। तत्राप्ययनामेषादौ सत्रिभे ग्राह्य उत्तरा:। तुलादौ दक्षिणा इति। ता विम्बस्य पादोरूपं गत्वर्द्धे वर्द्धते इति। (१) अयनम्—

अथ चोक्तं ब्राह्मे स्फुटसिद्धान्ते—

विक्षेपसत्रिराशिक्रान्तिवधो व्यासदलहृतो लिप्ता:।
शोध्यास्तयो: समदिशोर्यदन्यदिशोस्तयो: क्षेप्या: ॥

एवं तर्हि केनैव प्रकारेण मकरादावयनमुत्तरम्। तुलादौ दक्षिण-मिति न प्राप्यते। तस्मान्मेषादावयनमुत्तरं तुलादौ दक्षिणमिति। विकल्पेन सत्रिराशि परिकल्पनीयम्।

उदाहरणम्। तद् यथा। अर्कास्तमनान्तिकः स्फुटः शुक्रः ७।२२।३१। अस्मिन् राशित्रयं दत्त्वा जातः सत्रिराशिः १०।२२।३१ एतस्मात् ज्या ८०।२।५० एषा तात्कालिकेन विक्षेपेणानेन ११।३८ गुणिता जाता १०५११।८०६४। एता इन्द्रगाग्निभिर्विभज्यावाप्तं २।५० लिप्तादिफलमेतत्। अत्र विक्षेपो दक्षिणः। सत्रिराशेश्च तुलादित्वाद् दक्षिणमयनम्। तस्मादिदं फलं तात्कालिक-स्फुटग्रहादत्रिराशेरस्मात् ७।२२।३१ विशोध्य जातः कृते दृक्कर्म्मणि शुक्रः ७।२२।२८। यस्मादुक्तं विक्षेपायनसाम्ये शोध्यमिति।

अधुना द्वितीयदृक्कर्म्मानयनमाह—

**विषुवच्छाया-गुणिताद् विक्षेपाद् द्वादशोद्धृतात् सौम्यात्।**
**फलमृणधनं धनर्णं याम्यादुदयास्तमयलग्ने ॥५॥**

विषुवच्छायया गुणितो विषुवच्छायागुणितः। कः असौ भणति। विक्षेपः। तस्माद्विषुवच्छायागुणिताद्विक्षेपात् द्वादशोद्धृतात् सौम्यादुत्तरादित्यर्थः फलमृणं धनं यथासंख्यम्। क्व भणति। उदयास्तमयलग्ने। उदयलग्नं चास्तमयलग्नं च उदयास्तमयलग्नं तस्मिन्नुदयास्तमयलग्ने। उदयलग्ने फलमृणम्। अस्तलग्ने धनमित्यर्थः। अथ चेद् याम्याद्विक्षेपादागतः तत्फलं तदा धनर्णं यथासंख्यम्। उदयास्तलग्ने ऋणमिति। एवं कृते ग्रहस्योदयास्तलग्ने ते भवतः। एतदुक्तं भवति। पूर्व्वार्द्धे स्थिते ग्रहेऽर्कोदयकालिकस्य ग्रहस्योदयलग्नविधानेन दृक्कर्म्मद्वयं कार्य्यम्। तथा पश्चार्द्धे ग्रहस्योदयेऽस्तमये वा गण्यमाने नित्यमस्तलग्ने कार्य्यं न कदाचिदप्येवं विकल्पनीयम्। यदा ग्रहस्योदये गण्यमाने उदयलग्नमिति। तद् यथा द्वितीय-दृक्कर्म्मणि क्रियमाणे तात्कालिकं स्फुटविक्षेपं स्वदेशविषुवच्छायया संगुण्य द्वादशभिर्विभज्यावाप्तं लिप्तादिफलम्। एकदृक्कर्म्मकृते ग्रहे धनमृणं वा कार्य्यं कदेति। उत्तराद्विक्षेपादागतं फलमुदयलग्ने विचार्य्यमाणे ऋणं कार्य्यम्। अस्तलग्ने धनम्। अथ दक्षिणाद्विक्षेपादागतं फलम्। तथोदयलग्ने धनमस्तलग्ने ऋणमिति। उदयलग्नस्याद्यं नाम। अस्तलग्नस्यान्त्यमिति।

अथोदाहरणम्। तद् यथा। शुक्रस्य गच्छते। तथापि पश्चार्द्धेऽवस्थित-

त्वादस्तलग्नोक्तेन विधानेन द्वितीयं दृक्कर्म क्रियते। अस्तमनाख्यिके एकदृक्कर्मस्फुटे शुक्रेऽस्मिन् ७।२२।२८। तद् यथा। तात्कालिकविक्षेप: ११।२८। स्वदेशविषुवच्छाययानया ७ गुणितो जात: ८१।२६ अस्माद् द्वादशो ्तात् फलं ६।४० एतद्दक्षिणाद्विक्षेपादागतं अस्तलग्नवत् ग्रहस्य कृतदृक्कर्मग्रहादस्मात् विशोध्य जातो दृक्कर्मस्फुटशुक्र: ७।२२।२१। एतदस्तलग्नम्। अस्यान्यत् संज्ञेति।

अथ शुक्रादीनां दृश्यादृश्यांशानाह—

शुक्रगुरुज्ञार्किकुजा: कालांशैर्द्व्युत्तरैर्नवभि:।
दृश्यादृश्या: दृक्कर्मणा रवेर्द्वादशभिरिन्दु: ॥६॥

शुक्रो नवभि: कालांशै: रवेर्विप्रकृष्टो दृश्यते। ऊनैर्न दृश्यते। तथा जीव: एकादशभि: कालांशै: रवेर्विप्रकृष्टो दृश्यते। तथा बुध: त्रयोदशभि: कालांशै: रवेर्विप्रकृष्टो दृश्यते। ऊनैर्न दृश्यते। तथा शनि: पञ्चदशभि: कालांशै: रवेर्विप्रकृष्टो दृश्यते। ऊनैर्न दृश्यते। तथा कुज: सप्तदशभि: कालांशै: रवेर्विप्रकृष्टो दृश्यते। ऊनैर्न दृश्यते। तथा चन्द्र: रवेर्विप्रकृष्टो द्वादशभि: कालांशै: दृश्यते। ऊनैर्न दृश्यते। य एते बुधशुक्रयो: कालांशा: पठिता: एतैर्द्दग्गणितै: किं न भवति कदाचिदपि महदन्तरं न भवति। तथा तयोर्यथादृग्गणितै: किं न भवति। तथा ब्राह्मेण मतेनोत्तरेऽभिधास्याम इति। अङ्केनापि

| शु | बृ | बु | श | म | च |
|---|---|---|---|---|---|
| ९ | ११ | १३ | १५ | १७ | १२ |

एतद्दृश्यादृश्यांशा: शुक्रगुरुज्ञार्किकुजचन्द्रमसां क्रमेणेति।

प्रागूणमाद्यमधिकं पश्चाल्लग्नाद् ग्रहोदयोऽस्तमय:।
षड्भयुतमन्यमुदयैर्घटिका: कृत्वोनमधिकसमम् ॥७॥

प्रागूनं प्रथममूनम् आद्यं ग्रहोदयं लग्नमित्यर्थ:। प्रागुदयं करोति इत्याद्यम् ऊनं ऊनलग्नात् तात्कालिकादर्कादित्यर्थ:। अधिकं पश्चात् आदित्यादस्तमयं करोतीत्यर्थ:। एवं परिज्ञाते सति यदुदययदूनं स्वोदयै: कृत्वा कालांशा: कार्या:। इति।

कारणम्। यस्य ग्रहस्य पूर्व्वार्द्धे उदयोऽस्तमयो वा गण्यते स ग्रहोऽर्कोदयकालिको मध्यमः कार्य्यः। ततः स्फुटीकृत्योदयलग्नविधिना दृक्कर्म्मद्वयं कृत्वा ततो निरूप्यार्कः स्वोदयिकः स्फुटः कार्य्यः। उदयलग्नं परिकल्प्य उदयास्तमयं विचार्य्यते। यदि लग्नात् ग्रहोदयमूनं भवति तदा ग्रहस्य प्रथममुदयो भवति। पश्चादादित्यस्य। यदा तु लग्नात् ग्रहोदयलग्नमधिकं तदा प्रथमादित्योदयो भवति। पश्चाद् ग्रहस्य। अथ पश्चार्द्धे ग्रहस्योदयोऽस्तमयो वा क्रियते तदा मध्यमो ग्रहोऽस्तमनान्तिकः कार्य्यः। ततः स्फुटीकृत्यास्तलग्नोक्तेन विधिना दृक्कर्म्मद्वयं कृत्वाऽस्तमनान्तिकं लग्नं भवति। ततो निरूप्यम्। यद्यस्तमनान्तिकलग्नात् ग्रहास्तलग्नमूनं तदा ग्रहस्य पूर्व्वमस्तमयो भवति पश्चादर्कस्य। यदास्तमनान्तिकलग्नात् ग्रहास्तलग्नमधिकं भवति तदा प्रथममर्कस्यास्तमयः पश्चाद् ग्रहस्य। पूर्व्वार्द्धेऽर्कोदयलग्नात् ग्रहोदयं लग्नमूनं भवति। तयोश्चान्तरे दृश्यसमाः कालांशाः उत्पद्यन्ते तदा ग्रहो दृश्यः। यदा पुनरर्कोदयलग्नात् ग्रहोदयलग्नमधिकं भवति तदा ग्रहस्य दर्शनं नास्ति।

अथ कालांशानयनं व्याख्यायते। उदयैर्घटिकाः कृत्वोनमसिति समिति (?)। तत्र पूर्व्वार्द्धेऽर्कोदयलग्नसमस्तोदयैर्घटिका इति कालः साध्य। अथ पश्चार्द्धेऽर्कास्तमनान्तिक-लग्नात् सषड्ग्रहयुता चान्तरं कालः साध्यः। उदयो यदूनं यदधिकं समं स्वोदयैस्त्रिप्रश्नोक्तेन विधिना कालः साध्यः। एतदुक्तं भवति। यदा पूर्व्वोक्तोदयकालिकग्रहसुदयलग्नं चेकराशिस्थौ भवतः तदा तयोरन्तरं लिप्तापिण्डीकृत्य यस्मिन् राशावर्कोदयकालिको ग्रह उदयलग्नस्य व्यवस्थितस्तेन स्वराश्युदयेन संगुण्याष्टादशभिः शतैर्विभज्यावाप्तं चषकादिकालः। ततो यदि भिन्नराशिस्थौ भवतः तदा तयोर्यदूनं तस्य भुक्तभागैः। अधिकस्य भुक्तभागैः कालः साध्यः यदा राश्यन्तरितौ भवतः तदूनस्याभुक्तचषकाः साध्याः। अधिकस्य भुक्तचषकाः। तेषां योगेऽन्तरराश्युदयचषकाः संयोज्य कालांशा भवन्ति। एवं पश्चार्द्धे किन्तु शेषः। अस्तमनान्तिके षड्भिः संगुण्य प्राणाः कार्य्याः। य एव प्राणास्त एव कालघटिका यस्मात् षेणलिप्ताः सकाशैः प्राणा भवन्तीत्यतः प्राणानां षष्ठ्याभागमपहृत्य कालांशा भवन्ति। अथ चषकाणां षष्ट्या भागमपहृत्य घटिका भवन्ति। ताश्च षड्गुणिताः

कालांशा भवन्ति। एक एवार्थः तथा चोक्तं ब्राह्मे—अन्तरघटिकाः षड्गुणिताः तैः कालांशैरिति। ततः खदृश्यादृश्यांशैः सह विचारः कार्यः। तत उदये विचार्यमाणे यस्य खदृश्यादृश्यांशेभ्यः कालांशाः ऊनाः तस्योदयो भावी। यस्याधिकास्तस्य वृत्तः। अस्तमये विचार्यमाणे यस्य खदृश्यादृश्यांशेभ्यः कालांशा अधिका भवन्ति तस्यास्तमयो भावी। यस्योना तस्य वृत्तः। एवमुदयास्तमयं वा अतीतमेष्यं वा परिज्ञायते खदृश्यादृश्यांशानां कालांशानां चान्तरं कार्यम्। तदन्तरं लिप्तापिण्डं कृत्वार्कस्फुटभुक्तिग्रहस्फुटभुक्त्योरन्तरेण योगेन वा विभजनीयम्। वक्रेति। ऋजुगतिमाश्रिते ग्रहे भुक्त्यन्तरेण......योगेन लब्धं दिवसादिकालः। तेन कालेनार्कग्रहौ मध्यमौ तात्कालिकौ कार्यौ। ततस्तस्मिन् काले ग्रहः स्फुटीकार्यः। तस्य दृक्कर्मद्वयं कार्यम्। अर्कश्च तात्कालिकः स्फुटीकार्यः। ततस्तयोरन्तरं लिप्ताःपूर्ववद्ऽर्काक्रान्तराश्युदयचषकैः संगुण्याष्टादशशतैर्विभज्यावाप्तं कालः। अत्रापि यद्येकराशिस्थौ भिन्नराशिस्थौ वा भवतः तदा प्रथमवत्। षड्भयुतोनं कृत्वोनमधिकसममिति ततः तस्य चषकाः षड्भिः संगुण्य प्राणीकार्याः। प्राणानां षष्ट्या भागमपहृत्य कालांशका भवन्ति। ततः खदृश्यादृश्यांशैः सह भूयोऽपि विचारः कार्यः। एवं तावत् कार्यं यावत् खदृश्यादृश्यांशैः समाः कालांशा भवन्ति। इति यस्मिन् काले समीभूताः सम: स्फुट-उदयकालो वा भवति। अन्यत्र वाऽसकृत् कर्मणि लोकस्य भ्रान्तिर्भवति। अस्य च राशिषट्कं दृष्ट्वा जातमस्तमनान्तिकं तस्माद्विशेषेण व्याख्यायते। तथा पूर्वं उदयास्तमयो वा क्रियते। तदाऽर्कसद्योदयलग्नान्तरलिप्ता आदित्याक्रान्तराश्युदयेन संगुण्य पूर्ववद् विभज्यावाप्तः कालो भवति यद्येकराशिस्थौ। अथ भिन्नराशिस्थौ तदा प्रथमवत्। अथ पश्चार्द्धे ग्रहस्य उदयोऽस्तमयो वा गण्यते। तदार्कग्रहास्तलग्नान्तरघटिका रविक्रान्तराश्युदयः सप्तमराश्युदयेन संगुण्य पूर्ववद् विभज्याप्तकालः यद्येकराशिस्थौ भवतः। अथ भिन्नराशिस्थौ तदा पूर्ववत् षड्भयुतौ कृत्वा समधिकसममिति ततश्चषकाः षड्भिः संगुण्य पूर्ववत् कालांशा इति। एतच्चासकृत्कर्म कर्त्तव्यं प्रथमेन कदाचित् भिन्नराशिस्थौ कदाचिद् राश्यन्तरितौ भवतः यदा तदा पूर्ववत्।

उदाहरणम्। तद् यथा। अर्कास्तमनान्तिक. कृतदृक्कर्म्मणि स्फुट: शुक्र: ७।२२।२१। अथान्यदिशि इति संज्ञा पश्चार्द्धेऽवस्थितत्वात्। यद्यप्यस्योदयो गण्यते। तथाप्यस्तलग्नमेतत् पश्चार्द्धे स्थितत्वात् षड्भयुतमर्कादिगिति वचनात् षड्भयुतो जात: १।२२।२१ एतत् शुक्रस्यास्ते लग्नम्। अस्तमनान्तिकस्य स्फुटोऽर्क: ७।१०।३०। अस्य च राशिषट्कं दत्त्वा जातमस्तलग्नमिदम् १।१०।३०। अत्र विचार्य्यते। अस्तमयलग्नादस्मात् शुक्रस्यास्तमयलग्नमिदम् १।२२।२१ अधिकं तस्मात् पूर्व्वमादित्यास्तमयम् पश्चात् शुक्रस्येति। अनयोश्चान्तरं स्वदृश्यान्तरेभ्योऽधिका: कालांशा उत्पद्यन्ते तदा दृश्य: शुक्र: उदित इत्यर्थ:। एवं तावत् सामान्येन परिज्ञानम्।

अथ कालांशानयनम्। तद् यथा—अर्कास्तमयलग्नग्रहास्तलग्ने—

| | | |
|---|---|---|
| १ | १ | अनयोरेकराशिस्थावस्थितत्वादन्तरम् |
| १० | २२ | |
| ३० | २५ | |

११।५५। एतल्लिप्तापिण्डीकृतं जातम् ७१५। एतत् पश्चार्द्धत्वात्। आदित्याक्रान्तराश्युदयात् सप्तमराश्युदयेनानेन २४३ गुणितं जातम् १७३०५४ अस्या अष्टादशभि: शतैर्भागे हृते अवाप्तम् एते चषका: ९६। षड्भि: संगुण्य प्राणीकृता जाता: ५७६ एता: कालांशघटिका:। आसां षष्ट्या भागमपहृत्यावाप्ताः कालांशा: ९।३६ एते स्वदृश्यांशेभ्य: एभ्य: ८ अधिका:। उदयं च विचार्य्यते। तस्मात् शुक्रोदयो जात:। अथ कियान् कालोऽतीतस्येति तद् यथा। कालांशानामेषां ९।३६ स्वदृश्यांशै: सहितै: ८ अन्तरे कृते जातं ०।३६। एतल्लिप्तापिण्डीकृतम् ३६। अस्य भुक्त्यन्तरेणानेन १४।२२ अत्र शुक्रयो: शुक्रस्य वक्रगतित्वात् भागे हृतेऽवाप्तो दिवसादिकाल: २।२८।३६। एतावान् काल: शुक्रस्योदितस्य गत:। अनेन कालेन शीघ्रशुक्रौ तात्कालिकौ मध्यमौ कार्य्यौ। एवमन्यत्राप्युदाहरणीयमिति।

अथ पूर्व्वोदाहरणम्। तद् यथा—शाकेऽस्मिन् ७८६ मासा: ५ तिथि: १ अस्मिन् दिने कुचचेत्रे देशान्तरकृतौ मध्यमौ शीघ्रबृहस्पती अर्कोदयकालिकौ .

| | |
|---|---|
| ४ | ३ |
| १४ | २५ |
| १८ | २२ |

| | | | |
|---|---|---|---|
| अस्मिन् जीव: स्फुटीकृतो जात: | ४ । १ । २२ | अत्र चतुर्थकर्म्मकेन्द्रम् | ० । १५ । १८ |

अतो ज्या चतुर्थे कर्म्मणि शीघ्रफलं २।३२।२६ अस्य ज्या ६।३८। तत: केन्द्रज्येयं ।४०।०। अन्त्यफलज्ययानया ३० गुणिता जाता १२००। चतुर्थफलज्ययानया ६।३८ विभज्यावाप्तं कर्ण: १८१। तत: स्फुटजीवादस्मात् ४।१।२२। स्वपातमिदं २।२०।० संशोध्य शेषमिदं १।११।२२ अतो ज्या ८८।३०। एता मध्यमविक्षेपेणानेन ६० संगुण्यान्त्यकर्णेनानेन १८१ विभज्य फलम् ३२। एष: स्फुटविक्षेप उत्तर:। अस्मिन् काले स्फुटजीव: सत्रिराशि: ७।१।२२ अस्मात् ज्या ७८ एषा स्फुटविक्षेपेणानेन ३२ संगुण्य इन्दुगाग्निभिर्विभज्यावाप्तं फलं ४।३७ लिप्तादि चैतत्। एतदुत्तराशिवये ग्रहे दत्तम् विक्षेपायनभिन्नदिक्त्वात्। एवं कृतदृक्कर्म्मणो जीवाद्विशोध्य जातो द्विविकर्मस्फुटो गुरु: ४।१।१४। एतदुदयलग्नं पूर्व्वार्द्धे व्यवस्थितत्वात् जीवस्याद्यं नाम। अत्र च काल औदयिकोऽर्कस्फुट: ४।१२।२८। अस्माद् औदयिकार्कात् आद्याख्यमिदम् ४।१।१४ ऊनं तस्मात् प्रथमं जीवोदय:। पश्चादर्कस्येति। अनयोरन्तरात् कालांशा:। खदृश्याद्दृश्यांशेभ्योऽधिका उत्पद्यन्ते। अतो दृश्यो जीव उदित इत्यर्थ:। अथ कालांशा आनीयन्ते। तद् यथा। ग्रहस्योदयलग्नमाद्यसंज्ञमिदम् ४।१।१४ अर्कस्यौदयिक: स्फुट: ४।१२।२८ अनयोरन्तरम् ०।११।१५। एतल्लिप्तापिण्डीकृत्य अर्काक्रान्तराश्युदयेनानेन ३५६ संगुण्याष्टादशशतैर्विभज्यावाप्तम् १२३ एते चषका: षड्भि: संगुण्य षष्ट्या विभज्यावाप्तं कालांशा: १३।१ एतेषां खदृश्याद्दृश्यांशैरेतै: ११। सहान्तरे कृते जातम् २।१८ एतल्लिप्तापिण्डीकृतं जातम् १३८ अस्य भुक्त्यन्तरेणानेन रविजीवयोर्भागे हृते दिवसादिकाल:। अनेन कालेन शीघ्रजीवौ मध्यमौ तात्कालिकौ कार्य्यौ। एवमन्यत्रापि स्वदेशान्तरेण स्वविषुवच्छायया स्वोदयैश्च गणकैरुदाहरणीयमिति। एवमादित्यसन्निकर्षविप्रकर्षाभ्यामुदयास्तमयौ व्याख्यातौ। अधुना प्रतिदैवसिकं व्याख्यायते। यत्र यस्य ग्रहस्य प्रतिदैवसिकोदय:। पूर्व्वार्द्धे क्रियते स ग्रह: अर्कोदयकालिक: स्फुट: कार्य्य:। तत्र विप्रश्नोक्तेन विधिना तयोरन्तरात् काल: साध्य:। ऊनमधिकसममिति। ततो यस्यौदयिकार्कात् ग्रहोदयलग्नमूनं भवति तदा तावता कालेन राशिशेषेण ग्रहस्योदय:। अर्कोदयकालिकादर्कात्

ग्रहोदयलग्नमधिकं भवति। तदा तावति काले दिवसगते ग्रहोदयो भवति। एवं कालं परिज्ञाय तस्मिन् काले अर्कग्रहौ स्फुटीकार्य्यौ। तात्कालिकौ कृत्वा ग्रहस्य दृक्कर्म्मद्वयं कृत्वा तयोरन्तरात् कालः। एतैस्तावत् कार्य्यं यावत् कालो भवति। स स्फुटकालो रात्रिशेषे दिवसगते च वा भवति। अथ पश्चार्द्धे ग्रहस्य प्रतिदैवसिकस्यास्तमयः क्रियते। तदार्कग्रहावादित्यास्तमनिकौ स्फुटौ कार्य्यौ। ततो ग्रहस्यास्तलग्नोक्तेन विधिना दृक्कर्म्मद्वयं कृत्वा षड्भयुतं कार्य्यम्। अर्कस्य षड्भयुतं कृत्वास्तमनलग्नं भवति। ततस्तयोरन्तरे विप्रश्नोक्तेन विधिना कालः कार्य्यः। षड्भयुतं कार्य्यमर्कस्य षड्भयुतादस्तमनान्तिकात् सूर्य्यात् यदि ग्रहास्तलग्नमधिकं तदा तावति काले रात्रिगते ग्रहस्यास्तमयो भवति। अथ षड्भयुतात् सूर्य्यादस्तमनान्तिकात् ग्रहास्तलग्नमूनं भवति। तदा दिवाशेषेण कालेन ग्रहस्यास्तमयोऽतीतः। एवं कालं परिज्ञाय तस्मिन् कालेऽर्कग्रहौ स्फुटौ कृत्वा तयोरन्तरात् कालः पुनरपि साध्यः। एवं तावत् कार्य्यं यावत् कालोऽविशेषो भवति। तावत् काले दिवसशेषे भवति। तावत् काले दिनशेषे रात्रिगते वा ग्रहस्यास्तमयो भवति स्फुटः। एवं ग्रहस्यास्तलग्नं प्रसाध्यान्तरे विप्रश्नोक्तेन विधिना कालः साध्यः। ग्रहोदयलग्नमर्कं परिकल्प्य ततोऽनुपातवर्द्धितेऽर्के लग्नसमस्वोदयैर्घटिका इति घटिकाः साध्याः। तावत्प्रमाणं तस्मिन् दिने ग्रहस्य स्वदिनं भवति। एवं ग्रहदिनप्रमाणं कार्य्यम्। एतत् षष्टिघटिकाभ्यो विशोध्य शेषं रात्रिप्रमाणं भवति। एवमिष्टग्रहस्य रात्रिदिनप्रमाणे भवतः।

अथ पौर्णमास्यां चन्द्रोदयो व्याख्यायते। तत्रार्कचन्द्रावादित्यास्तमनान्तिकौ स्फुटौ कार्य्यौ। ततः स्वोदय-लग्नोक्तेन विधिना दृक्कर्म्मद्वयं कार्य्यम्। पूर्व्वार्द्धे स्थितत्वाद् भवेदास्तमनान्तिकः षड्भयुतः कार्य्यः चन्द्रमाः। आद्यसंस्थत्वात् षड्भयुतमन्यत् क्रियते नाद्यम्। अतश्चन्द्रमाः षड्भयुतो न कार्य्यः ततस्तयोरन्तरात् कालः ऊनमधिकसमंमिति। प्रकारेण षड्भयुतात् सूर्य्यात् यदि चन्द्रोदयलग्नमूनं भवति तदा तावत्कालेन दिनशेषेण चन्द्रस्योदयः। अथ चेत् षड्भयुतात् सूर्य्यात् चन्द्रोदय-लग्नमधिकं भवति तदा तावत्काले रात्रिगते चन्द्रस्योदयो भविष्यति। तत् तेन कालेनार्कचन्द्रौ तात्कालिकौ कार्य्यौ। चन्द्रमसः

उदयलग्नोक्तेन विधिना दृक्कर्म्मद्वयं कार्य्यम्। सूर्य्यश्च षड्भयुतः। ततस्तयोरन्तरात् कालः एवं तावत् कार्य्यं यावत् कालोऽविशेषो भवति। स्फुटश्चन्द्रोदयकालः दिनशेषे रात्रिगते वा भवति। एतत्प्रग्रहण-मोक्षादिषूपयोग्यमिति प्रतिदैवसिकमुदाहरणम्। तद् यथा—चन्द्रस्यास्तमनं प्रतिदैवसिकम्।

शाकः ७८६। तिथि १ अस्मिन् चैत्रशुक्लद्वितीयायां कियता कालेनार्कस्यास्तमितस्य चन्द्रास्तमयो भविष्यतीति प्रश्नः। तद् यथा—अस्तमनान्तिकौ रविचन्द्रौ मध्यमौ यथा।

| | | | | |
|---|---|---|---|---|
| ११ | १ | चन्द्रोच्चं च | ४ | अस्मिन् काले |
| १८ | १० | | ४ | |
| ५६ | २८ | | २२ | |
| ५४ | ३६ | | ३६ | |

अर्कचन्द्रराहवः स्फुटाः। दृक्कर्म्मस्फुटौ लग्नविधानेन पश्चादस्तमनत्वात्

| | | | |
|---|---|---|---|
| ११ | ० | ४ | चन्द्रषड्भयुक्ताः। |
| २२ | १४ | ७ | |
| १० | ५५ | ३४ | |
| ५२ | २४ | १० | |

| | | |
|---|---|---|
| अन्यद् वा जातः | ६ | अधिकत्वात् पूर्व्वमादित्यास्तमयः |
| | १४ | पश्चाच्चन्द्रस्येति परिज्ञातम्। |
| | ८ | |
| | ४ | |

इति चतुर्व्वेद-भट्टमधुसूदनसुत-पृथूदकस्वामिकृते खण्डखाद्यविवरणे

उदयास्तमयाध्यायः षष्ठः॥

## अथ चन्द्रशृङ्गोन्नत्यध्यायः

तस्य भानोः समुत्पन्नो ब्रह्मा लोक-पितामहः ।
तं प्रणम्यारभे भाष्यं चन्द्रशृङ्गोन्नतावहम् ॥

अथातः शृङ्गोन्नत्यध्यायो व्याख्यायते। तत्र तावत् चन्द्रमसः कथं शुक्लत्वस्य वृद्धिर्वा हानिर्वा। तत्र केचिदाहुः। यथा दक्षस्याष्टाविंशति दुहितरः कृत्तिकाद्यास्तत्र रोहिण्यामेवासक्तस्य कोपः। तस्य शापाच्चैनं किल क्षयः प्राविवेश, तस्य क्षयं दृष्ट्वौषधिभिर्भयभीताभिः सोमस्यादक्ष (?)... प्रसादितः। तेनाभिवर्द्धते शौक्ल्यं शनैः शनैः पक्ष (?) क्षीयत इति। एवं दक्षशापात् केचिदाहुरिन्दोः क्षयवृद्धी इति। तन्नेष्यते। यदि शापात् सितस्य हानिर्वृद्धिर्वा जायते तत् कथं गणितेन यस्मात् प्रमितिविषये गणितस्यावतारो भवति। अयं तु प्रमितिविषयो न भवति। यस्मात्पुनर्वं चन्द्रमसः योऽयं (?) तस्माद्दक्षशापात् क्षयोवृद्धिर्न भवति। यस्मात् प्रमितिविषये गणितमिति। अपरे त्वाहुः रविकक्षाया उपरि चन्द्रकक्षा तदपि नेष्यते। यद्युपरि चन्द्रमा भवेत् तदा तस्य भूदृश्यमर्द्धं नित्यमेव शुक्लं स्यात्। नित्यमेवार्ककरनिकरविस्फुरितत्वात्। तस्मादयमपि न भवति। अथ यथास्य क्षयवृद्धी ततो भण्यते। अर्ककक्षा चन्द्रमसोऽधो वर्त्तते (?)। तद्भवति यदा यस्मिन्नेव भूवृत्तभागेऽ......र्कों भवति तस्मिन्नेव यदा शशी भवति तदा इन्दोरर्ककराभिः मुखं सर्व्वंशुक्लं भवति। अर्कस्यासन्नत्वात् (?)। कृष्णस्त्वेवातपेनोर्द्धभागः। अर्द्धभागानुपृष्ठे कृष्णं भवति। एवं भूदृश्य-ममावास्यायां चन्द्रमसः कृष्णं भवतीति। अतो न दृश्यते चन्द्रमाः। ततः क्रमात् यथाऽर्कतलात् विप्रकृष्यते तस्मिन् दृश्योऽप्यार्द्धविप्रकर्षक्रमेणार्क-रश्मिपातो भवति। तेन विप्रकर्षक्रमेणास्माकं सितवृद्धिश्चन्द्रमसि दृश्यते। ततो राशिषट्कान्तरितोऽर्कात् भूवृत्तादपरभागस्थः पूर्णचन्द्रो दृश्यते। ततः परं क्रमेण यथार्कस्य सन्निकर्षमुपयाति तथास्य कृष्णे वृद्धिर्भवति। याव-

दमा शस्येति। तत्र केचिदाहुर्यथा कुतो रात्रावर्करश्मयः। अत्रोच्यते। रात्रावस्माकं भूवृत्तान्तरितोऽर्को न दृश्यते। यत्र च प्रदेशे शशी तत्र च भूवृत्तविप्रकृष्टो दृश्यते एवेत्यम्बुमयस्य चन्द्रगोलकस्यार्करश्मिवशेन शुक्लता भवति। न केवलं चन्द्रमसो यावत् सर्व्वेषामपि ग्रहाणां नक्षत्राणां चार्करश्मिवशेन शुक्लता भवतीति। तथा च यस्यां दिश्यर्कक्रान्तिवशेन चन्द्रो भवति ततः तस्यां दिशि चन्द्रमसः शृङ्गोन्नतिर्भवतीति सित-पक्षान्ते ऊर्द्धमर्द्धमादित्याभिमुखं वा दीप्यते। प्रागर्द्धसितपक्षान्ते-ऽर्काभिमुखत्वाद् दीप्यते। अर्कचन्द्रयोर्गतिवशेन शृङ्गोन्नतिरुत्पद्यते इति। अथ यद्यर्करश्मिवशेन चन्द्रमसः शुक्लता भवति ततः शुक्लतैव भवतु कथं च लोकमुद्योतते। अत्रोच्यते। एवं प्रादर्शे आतपक्षतोऽर्क-रश्मिवशात् तत्रस्थमपि गृहाभ्यन्तरं समन्तात् प्रकटीकरोति एवमपि चन्द्रमस्यम्बुमये गोलकेऽर्करश्मयो जगत् सर्व्वमुद्योतयन्ति। तथा चाचार्य्य-वराहमिहरः—

निःयमधःस्थस्येन्दोर्भाभिर्भानोः सितं भवत्यर्द्धम्।
स्वच्छाययान्यदसितं कुम्भस्येवातपस्थस्य॥
सलिलमये शशिनि रवेर्दीधितया मूर्च्छितास्तमो नैशम्।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥
त्यजतोऽर्कतलं शशिनः पश्चादवलम्बते यथा शौक्ल्यम्।
दिनकरवशात्तथेन्दोः प्रकाशतेऽधः प्रभृत्युदयः॥
प्रतिदिवसमेवमर्कात् स्थानविशेषेण शौक्ल्यपरिवृद्धिः।
भवति शशिनोऽपराह्ले पश्चाद्भागे घटस्येव॥४॥

तत्रादावेव चन्द्रचरदलानयनमाह—

**गुणखाद्रिशराग्निशरापञ्चनखैः शोधिताः शशिक्रान्त्या।**
**चरखण्डानि च तद्वत् क्रमोत्क्रमात् पिण्डितास्चान्द्रम्॥१॥**

वाक्यार्थः—गुणाश्च खं चाद्रयश्च गुणखाद्रयः शराश्च अग्नयश्च शराश्च शराग्निशराः। पञ्चौ च नखाश्च पञ्चनखाः। एतैर्यथाक्रमेण शोधिताः। शशिक्रान्त्या शशिनः क्रान्तिः शशिक्रान्तिः तया शशिक्रान्त्या। यथासंख्यं

त्रिष्वपि त्रीणि खण्डानि लभ्यन्ते। मेषवृषमिथुनसम्बन्धीनीत्यर्थः। न केवलं क्रमेण यावत् क्रमाधिकमुत्क्रमेण शोधनीया चरखण्डानि तद्वल्लभ्यन्ते इति। त एव पिण्डिता एकीकृत्य इत्यर्थः। चन्द्रस्येदं चान्द्रम्। किम्भूतं चरदलमिति वाक्यार्थः।

करणम्—यस्मिन् काले कर्त्ता शृङ्गोन्नतिं कर्त्तुमिच्छति तस्मिन् काले तेन मध्यमार्कचन्द्रपातास्तात्कालिकाः कार्य्याः। अर्कचन्द्रौ स्फुटौ कार्य्यौ। चन्द्राच्च द्विरसगुणाद्यैः खण्डैस्तत्क्रान्तिः कार्य्या। तात्कालिकाच्चन्द्रात् तात्कालिकेन पातेन च विक्षेपः कार्य्यः। ततस्तयोरेकदिग्योगे भिन्नदिग्वियोगः। चन्द्रमसः स्वक्रान्तिर्भवति। योगे दिक् ज्ञायते एव वियोगे योऽधिकस्तस्य या दिक् सैव चन्द्रगोलस्येति। एवं चन्द्रमसः स्वक्रान्तिः। ततस्तस्याः गुणखाद्रयः शोध्याः। त्र्यधिकानि सप्तशतानि इत्यर्थः। यदा न शुध्यन्ते तदा चन्द्रक्रान्तिः स्वदेशमेषचरखण्डकैः संगुण्य गुणखाद्रिभिः विभज्यावाप्तं यत् तत् स्वदेशचरदलं भवति। अथ चन्द्रक्रान्तेर्गुणखाद्रयः शुध्यन्ते। ततः परं शराग्निशरा न शुध्यन्ते। पञ्चशतानि पञ्चत्रिंशदधिकानीत्यर्थः। ततः गुणखाद्रीनां चन्द्रक्रान्तिं स्वदेशवृषचरखण्डेन संगुण्य शराग्निशरैर्विभज्यावाप्तं तत्र मेषचरदलचषकैः क्षिप्ता चन्द्रचरदलं भवति। अथ चन्द्रक्रान्तेर्गुणखाद्रयः शराग्निशराश्च शुध्यन्ते ततः परं पक्षनखा न शुध्यन्ते। द्व्यधिकं शतद्वयमित्यर्थः। तदा चन्द्रक्रान्तिं गुणखाद्रिशराग्निशरोनां स्वदेशमिथुनचरदलखण्डेन संगुण्य पक्षनखैर्विभज्यावाप्तं मेषवृषचरदलयोगे संयोज्य चन्द्रमसः चरदलं भवति। अथ चन्द्रक्रान्तेर्गुणखाद्रिशराग्निशराः पक्षनखाश्च शुध्यन्ते क्रमेण ततः परं तेषु उत्क्रमेण पक्षनखाश्च न शुध्यन्ते तदा चन्द्रक्रान्तिं गुणखाद्रिशराग्निशरापक्षनखोनां स्वदेशमिथुनचरखण्डकयोगे संयोज्य शशिनश्चरदलं भवति।

अथ चन्द्रक्रान्तेः गुणखाद्रिशराग्निशराः पक्षनखाः शुध्यन्ते। ततः परं भूयः शराग्निशरा न शुध्यन्ते तदा चन्द्रक्रान्तिं गुणखाद्रिशराग्निशराद्विगुणितपक्षनखोनां स्वदेशवृषचरचरदलचषकैः संगुण्य शराग्निशरैर्विभज्यावाप्तं स्वदेश-मेषवृष-द्विगुणित-मिथुन-चरदलखण्डकयोगे संयोज्य चन्द्रमसश्चरदलं भवति। एतावत् चन्द्रक्रान्तेः क्रमोत्क्रमशोधनं भवति। यदा सप्तदशशतानि दशाधिकानि चन्द्रमसः परमक्रान्तिर्भवति। एवं चन्द्र-

दिनप्रमाणे च। पञ्चदशघ्नीनयुक्तमिति न्यायेन स्वगोलवशेन दिनरात्रिप्रमाणे कार्य्ये। एवं भौमादीनामपि स्वस्फुटविक्षेप-युतवियुतायाः क्रान्तेर्गुणखाद्‌व्यादिशोधनेन चरदलं समुत्पाद्यम्। पञ्चदशघ्नीनयुक्तमिति दिनरात्रिप्रमाणे कार्य्ये सर्व्वस्यैव ग्रहस्य। स्वोदयाद् यावदस्तमयं तावद्दिनम्। स्वास्तमयाच्च स्वोदयं यावद्रात्रिरिति। अनेन प्रकारेण रात्रिदिनप्रमाणे क्रियेते। अत्र किञ्चिन्न्यूनाधिके भवतः। स्फुटे उदयास्तलग्ने प्रसाध्य उदयास्तमयोक्तेन विधिना भवतीति।

अथोदाहरणम्—शाके ९८६ तिथि १ अस्मिन् दिने शृङ्गोन्नतिः क्रियते। तद्यथा—कुरुक्षेत्रेऽर्कचन्द्रौ देशान्तरज्ञातौ मध्यमौ चन्द्रोच्चसहितावस्तमनान्तिकौ। रवि १०।१८।५२।५४। चन्द्र।०।१०।१२।२६। उ ४।४।३१।३६। अस्मिन्नेव कालेऽर्कचन्द्रौ स्फुटौ राहुसहितौ रविः ११।२२।१०।५१ चन्द्रः ०।१४।५५।२४ राहुः ४।७।२४।१०। अस्माच्चन्द्रमसः स्वक्रान्तिः ३६० एषोत्तरा क्रान्तिः। अस्मादपि विक्षेपो दक्षिणः २४७ अनयोर्भिन्नदिक् वियोगः ११२।५५ एषा चन्द्रमसः स्वक्रान्तिः ततोऽधिकत्वात् उत्तरा। अस्या गुणखाद्व्य एते ७०३ न शुध्यन्ते तस्मादेषा मेषचरखण्डमानेन ६८ गुणिता जाता ७७८१।१५ गुणखाद्रिभिर्विभज्यावाप्तम् ११ एते चन्द्रमसश्चरदलचषकाः। पञ्चदशघ्नीनयुता इति न्यायेन दिनरात्रिप्रमाणे। एवमन्येषामप्युदाहरणीयमिति।

अधुना भुजकोटिकर्णानयनमाह—

अर्कशशिक्रान्तिकलान्तरैक्यजीवा समान्यगोलकयोः।
चन्द्रच्छायाकर्णेन संगुण्य लम्बकविभक्ता ॥२॥
सदृशैर्युताऽन्यथोना विषुवच्छायाङ्गुलैर्भुजो याम्ये।
यत्रेन्दुर्द्वादशकः कोटिस्तद्वर्गयुतिपदं कर्णः ॥३॥

वासनार्थः—अर्कश्च शशी चार्कशशिनौ तयोः क्रान्तिकला अर्कशशिक्रान्तिकलाः। तासामन्तरैक्यं यथासंख्यं समान्य-गोलकयोः समगोलकयोरन्तरं अन्यगोलकयोरैक्यं तस्य जीवा। सा चन्द्रच्छायाकर्णेन संगुण्य

चन्द्रमसः छायाकर्णस्तेन संगुण्य चन्द्रमसः छायाकर्णेन संगुण्य तात्कालिकेन चन्द्रमसः सम्बन्धिना छायाकर्णेन संगुण्य गुणिता कार्य्या इत्यर्थः। अथ लम्बकविभक्ता स्वदेशलम्बज्यया विभजनीया इत्यर्थः। सदृशैर्युता। एकदिग्भिरित्यर्थः। अन्यथोना भिन्नदिक् ऊनेत्यर्थः। कैः भणति। विषुवच्छायाङ्गुलैः। विषुवच्छायाया अङ्गुलानि विषुवच्छायाङ्गुलानि तैः। याम्यदिक् दक्षिणैरित्यर्थः। एवं कृतेऽर्कस्य क्रान्तिकलान्तरैक्यजीवा भुजा भवतीति। यत्रेन्दुः स भुजः। यस्मिन् चन्द्रमा भवतीत्यर्थः। असौ कर्णः कथं भवति इति भणति। द्वादशकः द्वादशाङ्गुल इत्यर्थः। कोऽसौ कोटिः। तद्वर्गयुतिपदं कर्णः। तयोः वर्गौ भुजकोटिवर्गौ इत्यर्थः। तयोर्वर्गयोर्युतिः। तस्या युतेः पदं तद्वर्गयुतिपदं मूलमित्यर्थः। यदेव पदं स एव कर्णः। तस्याग्रे चन्द्रो भवति इति वाक्यार्थः।

करणम्—यस्मिन् काले शृङ्गोन्नतिः क्रियते तस्मिन् कालेऽर्कचन्द्रौ स्फुटौ कार्य्यौ। तयोः क्रान्ती कार्य्ये। चन्द्रस्य स्वविक्षेपयुतवियुता स्वक्रान्तिः कार्य्या। ततस्तयोः क्रान्त्योर्यदा दिगैक्यं भवति तदान्तरं कार्य्यम्। अथ तयोर्दिग्भेदो भवति तदैक्यं कार्य्यम्। एवं कृते यद्भवति तस्य त्रिंशत्-समवेति जीवा कार्य्या। सा च तात्कालिकेन छायाकर्णेन गुणनीया। चन्द्रच्छायाकरणं व्याख्यायते। यस्मिन् दिने शृङ्गोन्नतिः क्रियते तस्मिन् दिने चन्द्रमस उदयास्तलग्ने कार्य्ये। तत्र उदयमर्कलग्नं परिकल्प्य अस्तलग्नमिष्टकालिकं लग्नं परिकल्प्य ततोऽनुपातवर्द्धितेऽर्के लग्नसमे स्वोदयै-र्घटिका इति कालः साध्यः। तावान् कालः चन्द्रमसः तस्मिन्नहनि स्वदिनं भवति। तस्यार्द्धं चन्द्रदिनार्द्धं तस्मिन् काले कियान् कालः स्वदिनस्य गत इति परिज्ञाय नतं ग्राह्यम्। ततस्तस्योत्क्रमजीवा कार्य्या। तद्दैवसिक-चन्द्रचरदलस्य च जीवा कार्य्या। चन्द्रमसः मध्याह्निकां स्वक्रान्तिं कृत्वा तत्क्रान्त्यंशाग्रैक्यान्तरद्दीनेति न्यायेन दिनदलकर्णः कार्य्यः।

ततः "त्रिज्याचरार्द्धजीवायुतहीनान्त्या नतोत्क्रमज्योना। छेदोऽन्त्याया दिनदलकर्णगुणायाः फलं कर्णः"। इति कर्णः कार्य्यः। स तात्कालिक-चन्द्रच्छायाकर्णो भवति। तेनान्तरैक्यजीवां संगुण्य स्वदेशलम्बज्यया विभज्याङ्गुलादिफलं यथादिक् स्यात्। चन्द्रमा उत्तरेण स्थितस्तदोत्तरम्। अथ दक्षिणेन तदा दक्षिणमिति। यस्योत्तरा क्रान्तिः स उत्तरेण यस्य

दक्षिणा स दक्षिणेनेति। यदोभयोरुत्तरा तदा यस्याधिका स्वक्रान्तिः स उत्तरेण इतरस्तु दक्षिणेन। अथोभयोरपि दक्षिणा। तदा यस्याधिका स दक्षिणेन इतरस्तूत्तरेणेति। एवं फलाङ्गुलानां दिक् परिज्ञाय ततः स्वदेश-विषुवच्छायाङ्गुलैर्नित्ययाम्यैः सहैकदिग्योगो भिन्नदिग्वियोगः कार्य्यः। एवं कृते भुजो भवति। ततो द्वादशकः कोटिरिति परिकल्प्य भुजकोटिवर्ग-युतिपदं कर्णो भवति।

अथोदाहरणम्—तद्यथा—तात्कालिकार्कात् क्रान्तिर्दक्षिणा १८८।१४। चन्द्राच्च विक्षेपयुता स्वक्रान्तिरुत्तरा १२।५५। अनयोर्भिन्नदिक्त्वादैक्यं कृतं जातं ३०१।३६ अस्य ज्या १३।४ एषा तात्कालिकेन चन्द्रच्छाया-कर्णेन गुणनीया। तद् यथा। चन्द्रच्छायाकर्णः क्रियते। चन्द्रमस उदयास्तलग्ने ०।१२।३८।४।२४। ६।१४।८।४। अनयोरन्तरादूनमधिक-समिति प्रमाणेन घटिका आनीता जाता ३१।२६। एवं चन्द्रमसः स्वदिनप्रमाणम्। अस्मिंश्च काले चन्द्रदिनस्यैतावत्यो घटिका गताः।४।२३। एताभ्यश्चन्द्रदिनार्द्धघटिका एताः १५।४३ अपास्य शेषम् ११।२० एतन्नतसंज्ञम् अस्मादुत्क्रमज्या ८४।१२ अस्मिन् दिने चरदलचषकाः ११ एतेभ्यो जीवा २।५३। चन्द्रमध्याह्ने तात्कालिकौ चन्द्रपातौ ०।११।३५।५। ४।७।३४।५४। आभ्यां सकाशात् विक्षेपयुतवियुता चन्द्रमसः स्वक्रान्तिरुत्तरा ३८।२१। ततः क्रान्तिस्वाक्षांशैक्यान्तरज्योनेति न्यायेन दिनदलकर्णगुणायाः फलं कर्ण इति दिनदलकर्णः १३।४८। ततस्त्रिज्याचरार्द्धजीवा युतहीनान्त्या नतोत्क्रमज्योना। छेदोऽन्त्याया दिनदलकर्णगुणायाः फलं कर्ण इति। ३५५७। अनेनान्तरैक्यज्यामिमां संगुण्य स्वच्छेदेन लब्धज्ययानया १२८।२० विभज्यावाप्तमङ्गुलादि फलं तच्चेदम्। एतदादित्याच्चन्द्रमस उत्तरेणाव-स्थितत्वात् उत्तरमिति। ततः स्वदेशविषुवच्छायाङ्गुलैरमीभिः ७ सहान्तरे कृते जातम् ३।२२ एषोऽङ्गुलादिर्भुजः द्वादशकः कोटिः १२। ततो भुजवर्गः ११।१२ कोटिवर्गः १४४ अनयोर्योगः १५५।१२ अस्य मूलमिदम् १२।२८। एष कर्ण इति।

अधुना शृङ्गानयनमाह।

**अर्कचन्द्रयोरन्तरांशकास्तिथिविभाजिताः शुक्लम्।**

अर्कश्च चन्द्रश्चार्कचन्द्रौ। तयोरन्तरमर्कचन्द्रयोरन्तरं तस्मिन् येऽंशा अन्तरांशास्ते भागा इत्यर्थः। ते तिथिविभाजितास्तिथिभिर्विभाजिताः। पञ्चदशभिर्विभक्ता इत्यर्थः। लब्धं फलमङ्गुलादि शुक्लं भवतीति वाक्यार्थः।

करणम्—तात्कालिकार्कचन्द्रयोरन्तरं कृत्वा तदन्तरं केन्द्रं परिकल्प्य तस्मात् ज्याकेन्द्रं कार्य्यम्। तद्भागपिण्डं कृत्वा पञ्चदशभिर्विभजेत्। लब्धं फलमङ्गुलादि शुक्लम् भवति। कृष्णाष्टम्यर्द्धादारभ्य यावत् शुक्लाष्टम्यर्द्धं तावदेव फलं शुक्लम्। शुक्लाष्टम्यर्धादारभ्य कृष्णाष्टम्यर्द्धं यावत् कृष्णं परिकल्प्यमिति।

अथोदाहरणम्। तद् यथा। तात्कालिकावर्कचन्द्रौ ११।१२।१०।५३॥ ०।१४।५५।२४ अनयोरन्तरम् १०।२७।१५।२८। अस्मात् ज्याकेन्द्रं ०।३२।४४।३१ पञ्चदशभिर्भागे हृते अङ्गुलादि लब्धम् २।११। एवं कृष्णमप्युदाहरणीयमिति।

अधुना वियोगमाह—

कर्णेन चन्द्रबिम्बे द्वादशके सूर्य्यवच्छाया ॥४॥

कर्णेन कर्णप्रमाणेन इत्यर्थः। चन्द्रबिम्बे चन्द्रमसो बिम्बे चन्द्रमण्डल इत्यर्थः। तस्मिन् चन्द्रबिम्बे द्वादशके द्वादशाङ्गुले इत्यर्थः। सूर्य्यवच्छाया सूर्य्येण तुल्यं सूर्य्यवत् कार्य्यमित्यर्थः।

करणम्—तात्कालिकचन्द्रमसः तात्कालिकमर्कं विशोध्य यत् शेषं तद् यदा प्रथमपदे वर्त्तते तदा पश्चिमाभिमुखो भूत्वा परिलेखं कुर्य्यात्। तथा चार्कात् शशी द्वितीये पदे वर्त्तते तदा पूर्व्वाभिमुखो भूत्वा परिलेखं कुर्य्यात्। अथ तृतीये पदे व्यर्कः शशी तदा पश्चिमाभिमुखो भूत्वा परिलेखं कुर्य्यात्। अथ चतुर्थे पदे व्यर्कः शशी वर्त्तते तदा पूर्व्वाभिमुखो भूत्वा परिलेखं कुर्य्यात्। यदा प्रथमे पदे व्यर्कः शशी तदा शुक्ला शृङ्गोन्नतिः। अथ द्वितीये पदे व्यर्कः शशी वर्त्तते तदा कृष्णा शृङ्गोन्नतिः। अथ तृतीये पदे तदापि कृष्णा। अथ चतुर्थे पदे व्यर्कः शशी वर्त्तते तदा शुक्ला शृङ्गोन्नतिः। एतदुक्तं भवति। शुक्लपक्षे यावदष्टम्यर्द्धं तावत् पश्चिमाभिमुखेनोपदेष्टव्यम्। अतःपरं यावत् पौर्णमासी तावत् पूर्व्वाभिमुखेन। अतःपरं यावत् कृष्णाष्टम्यर्द्धं तावत् पश्चिमाभिमुखेन। अतःपरं यावदमावास्यान्तं तावत् पूर्व्वाभिमुखेन। कृष्णा-

ष्टम्यर्द्धात् यावत् शुक्लाष्टम्यर्द्धं तावत् शुक्ला शृङ्गोन्नतिः। शुक्लाष्टम्यर्द्धात् कृष्णाष्टम्यर्द्धं यावत् कृष्णा शृङ्गोन्नतिः। एवं दिगभिमुखावस्थानं परिज्ञाय शुक्ला कृष्णा वा शृङ्गोन्नतिरिति परिज्ञाय ततः परिलेखः। अथ परिलेखः क्रियते। तद् यथा। समायां भूमौ मध्ये विन्दुः कार्य्यः। तं सूर्य्यं परिकल्प्य ततो यदि सूर्य्यात् चन्द्रमा उत्तरेण तदा भुजाङ्गुलप्रमाणं सूत्रं बिन्दुत आरभ्य उत्तरेण देयम्। अथ सूर्य्याच्चन्द्रमा दक्षिणेन तदा दक्षिणेन देयम्। एवं शुक्लायां शृङ्गोन्नतौ। अथ कृष्णायां शृङ्गोन्नतिः परिज्ञाता। तदा भुजाङ्गुलमितं सूत्रं बिन्दुत आरभ्य विपर्य्ययेण देयम्। यदि सूर्य्यास्तात् चन्द्रमा उत्तरेण तदा दक्षिणेन। यदा दक्षिणेन तदा उत्तरेण देयम्। एवं यथादिक् भुजं प्रसार्य्य ततो भुजाग्रात्दाक्षाभिमुखं कोट्यङ्गुलमितं सूत्रं प्रसारयेत्। अथ द्वितीये व्यर्कः ग्रासो तदा पश्चिमाभिमुखम्। अथ तृतीये तदा पूर्व्वाभिमुखम्। अथ चतुर्थे पदे व्यर्कः ग्रासो तदा पश्चिमाभिमुखमिति। ततः कोट्यग्रात् मध्यबिन्दुं यावत् कर्णाङ्गुलमिताङ्गुलमितं सूत्रं नेयं तत्र प्रमाणेनैव भवति। एवं त्र्यस्रं क्षेत्रमुत्पाद्य ततः कोटिकर्णयोर्यत्र योगः तत्र बिन्दुं कुर्य्यात्। तं मध्यं कृत्वा षडङ्गुलेन सूत्रेण चन्द्रमण्डलमालिखेत्। तत्र चन्द्रमण्डलकर्णयोर्यत्र सम्पातः तस्मात् शुक्लं कृष्णं वा कर्णमार्गेण चन्द्रमण्डलमध्यं प्रवेश्यम्। यत्र समाप्यते तत्र बिन्दुः कार्य्यः। स सितासितबिन्दुरित्युच्यते। सितासितयोरन्तरेऽवस्थितत्वात्। तस्माद् बिन्दुत षडङ्गुलेन सूत्रेण चन्द्रमण्डलमालिखितं जातं तच्चेदम्।

ततः कर्णचन्द्रमण्डलयोः संपातादारभ्य कर्णमार्गेण शुक्लं प्रवेश्य सितासितविन्दुर्दत्तः। अस्मिन् सितासितविन्दोरारभ्य षडङ्गुलं सूत्रं चन्द्रमण्डलपटे नीतं यत्र समाप्तं तत्र बिन्दुं दत्त्वा भूयोऽपि षडङ्गुलसूत्रेण वृत्तमुत्पादितं सितासितबिन्दुपर्य्यन्तम्। एवं दक्षिणेन शृङ्गोन्नतिरुत्पद्यते सर्व्वमपास्य केवलं चन्द्रमण्डलं स्थितम्।

एवं भूमौ कृता? पूर्व्वाव्यस्ते कृते। एवं शुक्ला शृङ्गोन्नतिः। कृष्णा चानेन प्रकारेण किञ्चिद् विशेषः दक्षिणो भुज उत्तरेण देयः। उत्तरश्च दक्षिणेन शेषं सामान्यमेव। एवमन्यत्राप्युदाहरणीयमिति। स्वदेशान्तरेण विषुवच्छायया स्वनतज्या चेति अर्कच्छायेति।

करणम्—यस्मिन् काले अभीष्टे प्रग्रहण-निमीलन-मध्योन्मीलन-मोक्षेष्टग्रासार्धग्रासानामन्यतमे चन्द्रमसः छाया क्रियते तस्मिन् काले चन्द्रचन्द्रोच्चपाता मध्यमास्तात्कालिकाः कार्य्याः। ततश्चन्द्रं स्फुटीकृत्य तस्माच्चन्द्रमसो विक्षेपयुतवियुता क्रान्तिः कार्य्या। तस्याः क्रान्तेर्गुणखाद्रय इति शोधनेन चन्द्रचरदलं साध्यम्। ततश्चन्द्रमस उदयास्तलग्ने साध्ये। तयोरन्तरा दिनप्रमाणं कार्य्यम्। तदर्द्धं कृत्वा तस्मिन् काले कियान् कालश्चन्द्रमसः स्वदिनस्य गत इति साध्यः। ततः स्वदिनमध्याह्ने चन्द्रं स्फुटीकृत्य तस्माद्विक्षेपयुतवियुता स्वक्रान्तिः कार्य्या। ततः क्रान्ति—पलांशैक्यान्तरहीन इति न्यायेन दिनदलकर्णः कार्य्यः। तद्दैवसिकस्य चन्द्रचरदलस्य जीवा कार्य्या। तस्मिंश्च काले चन्द्रदिनमध्याह्नात् पूर्व्वेणापरेण वा नतं ग्राह्यम्। तस्य क्रमज्या कार्य्या। एवमुपकरणानि कृत्वा ततः त्रिज्या चरार्द्धजीवायुतहीनाऽन्त्या नतोत्क्रमज्योना छेदोऽन्त्याया दिनदलकर्णगुणायाः फलं कर्ण इति तात्कालिकाश्चन्द्रमसः छायाकर्णः कार्य्यः। ततः कर्णच्छायाकृत्योरिति न्यायेन छाया कार्य्या। तावती छाया द्वादशाङ्गुलस्य शङ्कोस्तस्मिन् काले चन्द्रमसो भवति। एवमिष्टकाले चन्द्रमसः छाया कार्य्येति। तथा चोक्तं ब्राह्मे स्फुटसिद्धान्ते शृङ्गोन्नतौ परिलेखकरणे पश्चिमाभिमुखो राशिषु मेषतुलादिषु संशोध्य दिवाकरं चन्द्रात्। पूर्व्वाभिमुखं कर्कटमकरादिषु भवति शुक्लसंस्थानं परिकल्प्यार्कबिन्दुं तस्माद् बाहुं यथादिशं दत्त्वा बाह्वग्रात् प्राच्यपरां कोटिं तिर्य्यक्स्थितं कर्णं कर्णाग्रे चन्द्रमसं परिलेख्य सितं प्रवेश्य कर्णेन। शशिबिम्बे शुक्लाया परिलेख्या स्वगतस्तत्रैवेति। स्थानेन्दौ शुक्लं परिलेख्य पश्चिमाभिमुखः प्राच्यपरे विपरीते फलकेऽन्यत् पूर्व्वमुक्तवत् कार्य्यमिति।

इति भट्टमधुसूदनसुत-चतुर्व्वेद पृथूदकस्वामिकृते खण्डखाद्यविवरणे शृङ्गोन्नत्यध्यायः सप्तमः ॥

---

## अथ समागमाध्यायः

यश्चन्द्रकोटिकरकोरकभारभाजि-
बभ्राम बभ्रुणि जटाकुहरे हरस्य ।
तद्वः पुनातु हिमशैलशिलानिकुञ्ज-
झाङ्कारडम्बरविराजिसुरापगाम्भः ॥

वासुदेवं नमस्कृत्य विशुद्धेनान्तरात्मना ।
समागमे प्रवक्ष्यामि भाष्यं तत्त्वार्थसंयुतम् ॥

अथातः समागमाध्यायं व्याख्यास्यामः । तत्रादावेव भौमादीनां पातानयनमाह—

**कृतयमवसुरसदशकाः पातांशा दशगुणाः कुजादीनाम् ।**

इयमार्य्यार्द्धमुदयास्तमयाध्याये व्याख्यातम् । अथ भौमादीनां मध्यविक्षेपानाह—

**नवरविरसार्कसूर्य्या विक्षेपकला गुणा दशभिः ॥१॥**

इदमार्य्यार्द्धमप्युदयास्तमयाध्याये व्याख्यातम् । अधुना कर्णानयनमाह—

**शीन्द्रज्यान्त्यफलज्यागुणिता फलजीवया हृता कर्णः ।**
**त्रिज्यान्त्यफलज्योना चक्रार्द्धे संयुता चक्रे ॥२॥**

इयमार्य्या उदयास्तमयाध्याये व्याख्याता । अधुना समागमकालपरिज्ञानमाह—

**भुक्त्यन्तरयुतिभाजितमनुलोमविलोमविवरमाप्तदिनैः ।**
**अधिकेऽल्पगता वेष्यत्यधिकगतौ ग्रहयुतिरतीता ॥३॥**

वासनार्थः—भुक्तिश्च भुक्तिश्च भुक्ती तयोरन्तरं भुक्त्यन्तरं विवरं युतिर्योगः । तया भुक्त्यन्तरेण युत्या भाजितं विभक्तमित्यर्थः । किं तद्

भणति। अनुलोमविलोमविवरं यथासंख्यमिति। अनुलोमयोर्विवरमनुलोमविवरम्। एकगत्याश्रितयोर्विवरमित्यर्थः। अनुलोमयोर्विवरं भुक्त्यन्तरेण विभजनीयमित्यर्थः।

विलोमयोर्विवरं प्रतिकूलगत्याश्रितयोर्विवरमित्यर्थः। तद्विलोमविवरम् भुक्त्योर्योगेन विभजनीयमित्यर्थः। आप्तदिनैर्लब्धदिवसैरित्यर्थः। अधिकेऽल्पगताविष्यतीति। अधिके सति भणति। अल्पगतौ अल्पा गतिर्यस्यासावल्पगतिः। स्वल्पगतिः स्वल्पभुक्तिरित्यर्थः। तस्मिन् अधिके सति एष्यति भविष्यतीत्यर्थः। अधिकगताविति। अधिका गतिर्यस्यासावधिकगतिः। तस्मिन् अधिके सति। अधिकक्रान्तिरित्यर्थः (?)। काऽसौ भणति। ग्रहयुतिः। ग्रहयोर्युतिः ग्रहयोः समागम इत्यर्थः।

कारणम्—इष्टदिने ग्रहद्वयं स्फुटीकृत्य ततस्तयोरन्तरं कार्यं तदन्तरं लिप्तापिण्डं कार्यम्। तस्य लिप्तापिण्डस्य ग्रहयोर्भुक्त्यन्तरेण भुक्तियोगेन वा भागो ह्यार्य्यः। कदेत्युच्यते। यदा ऋजुगती भवतः तदा भुक्त्यन्तरेण। अथ तौ वक्रिणौ भवतस्तदापि भुक्त्यन्तरेण। अथैको वक्री भवति तदा भुक्तियोगेनेति ग्रहान्तरं विभज्य दिवसादिकालो भवति। तावत्कालः समागमस्य एष्यस्यातीतस्य वा भवति। उभयोर्ऋजुगतिमाश्रितयोर्मन्दाधिक्ये समागम एष्यः। शीघ्राधिक्येऽतीतः। अथैको वक्री(?)-सन्मेरधिकः तदा समागमो भावी। अथोनस्तदातीतः। अथोभौ वक्रिणौ भवतः तदा शीघ्राधिक्ये समागमो भावी। मन्दाधिक्येऽतीतः। वक्रिणोरपि ग्रहयोर्यस्याधिका स्फुटभुक्तिः स शीघ्रः। यस्योना स मन्दः। इत्येवं समागमकालं परिज्ञाय ततो दिनकालदिवसादिना मध्यमौ ग्रहौ तात्कालिकीकृत्य स्फुटौ कार्यौ। ततस्तयोरन्तरं कार्यम्। तदनन्तरं लिप्तापिण्डीकृत्य ग्रहयोर्भुक्त्यन्तरेण भुक्तियोगेन वा विभज्यावाप्तं दिवसादिकालः तेन भूयोऽपि मध्यमौ ग्रहौ तात्कालिकौ कृत्वा स्फुटौ कार्य्यौ। ततस्तयोरन्तरं कार्य्यम्। तदन्तरं लिप्तापिण्डीकृत्यान्तरात् पुनरपि काल एवमसकृत् कर्मणा दिवसं प्राप्य तस्मिन् दिने भूयोऽपि ग्रहौ तात्कालिकौ स्फुटौ कार्य्यौ। तौ च तस्मिन् काले समलिप्तौ किञ्चिन्न्यूनाधिकौ भवतः। इति।

अथोदाहरणम्—शाकः ७८६ मास १ तिथि ४। अस्मिन् दिने

कुरुक्षेत्रे देशान्तरकृतौ स्फुटावर्द्धरात्रिकौ चन्द्रशुक्रौ २।१८।१॥ २।८।१३ अनयोरन्तरम् ०।१०।४८। एतल्लिप्तापिण्डीकृतम् ६४८ एतद्ग्रहयोर्ऋजुगतित्वात् भुक्त्यन्तरेण चन्द्रशुक्रयोरनेन ६८८ विभज्यावाप्तं दिवसादिकालः ०।५६।२४ एतावान् कालः समागमस्यातीतस्य। चन्द्रमसोऽधिकत्वात् उभयोरपि ऋजुगतित्वाच्च अनेन कालेन मध्यमौ चन्द्रशुक्रौ तात्कालिकीकृतौ शुक्रशीघ्रोच्चसहिताविमौ २।२।३८।०।२०।४७।४।२७।५६। ४।८।८। अस्मिन्नेव काले स्फुटौ चन्द्रशुक्रौ २।७।१।२॥ २।७।१६।४६॥ एवं किञ्चिन्न्यूनाधिकौ समलिप्तौ जातौ। अनेनैव प्रकारेण समलिप्तौ भवतः। किन्तु विवरं स्वभुक्तिगुणितमितीयमार्य्या निष्प्रयोजना भवतीत्यन्तः समलिप्तौ कृतौ। केवलं दिवसं प्राप्तमित्यर्थः। अधुना ग्रहयोः समलिप्तीकरणमाह—

विवरं स्वभुक्तिगुणितं पृथक् तथैवोद्धृतं क्षयोऽतीते।
धनमेष्यति समलिप्तौ वक्रगतेः क्षयधनं व्यस्तम् ॥४॥

विवरमन्तरमित्यर्थः। स्वभुक्तिगुणितं स्वकीयया भुक्त्या गुणितं पृथक् गतिः एकस्मिन् प्रदेशे एकस्य ग्रहस्य अन्यस्मिन् प्रदेशे द्वितीयस्येत्यर्थः। तथैवोद्धृतमिति। तथैव तेनैव प्रकारेणेत्यर्थः। उद्धृतं विभक्तम्। यथा पूर्वं ग्रहान्तरं भुक्त्यन्तरेण भुक्तियोगेन वा तथैव विभजनीयमित्यर्थः। क्षयोऽतीते ऋणमित्यर्थः। धनमेष्यति समागमे। एवं कृते समलिप्तौ भवत इत्यर्थः। वक्रगते क्षयधनं व्यस्तमिति। वक्रं गतौ वक्रगतः पश्चिमाभिमुखगतिरित्यर्थः। अतीते धनमेष्ये तु ऋणमित्यर्थः।

करणम्। तयोर्ग्रहयोः किञ्चिन्न्यूनाधिकयोरन्तरं ज्ञात्वा तल्लिप्तापिण्डं कार्य्यम्। ततो लिप्तापिण्डं स्थानद्वयगतं कृत्वा एकस्मिन् प्रदेशे एकस्य ग्रहस्य भुक्त्या गुणनीयम् अन्यस्मिन् प्रदेशे द्वितीयस्य। ततः पूर्ववद् भागो भुक्त्यन्तरेण भुक्तियोगेन वा हर्त्तव्यः। तिर्य्यग्गतिमाश्रितयोर्ग्रहयोर्भुक्त्यन्तरेण वक्रि तयोरपि द्वयोर्भुक्त्यन्तरेण। तथैकस्मिन् वक्रिणि भुक्तियोगेनाप्ते पृथक् पृथक् स्वफले भवतः। ताभ्यां स्वफलाभ्यामधिकौ कार्य्यौ। एवं कृते समलिप्ता भवतः। ततस्तद्दैवसिकस्यार्द्धरात्रिकस्य

ग्रहस्य समलिप्तस्य चान्तरं कृत्वा तल्लिप्तापिण्डं कार्य्यं ततः षष्ट्या गुणनीयम्। ततः स्फुटभुक्त्यास्य भागे हृते घटिकादिकालो लभ्यते। यद्यर्द्धरात्रात् पूर्व्वेण समागमोऽतीतः। अथापरेणार्द्धरात्रात् समागमः तदा तावतीभिर्भविष्यति। एवं कालं परिज्ञाय ततो यदि बुधसितयोरन्यतरस्यान्यतरेण सह समागमो गण्यते तदा तयोः स्वशीघ्रस्तात्कालिकः कार्य्यो विक्षेप इति प्रकटार्थत्वान्नोदाहृतमिति।

अधुना विक्षेपानयनमाह—

**स्वं स्वं विशोध्य पातं समलिप्तात् सौम्यशुक्रयोः शीघ्रात्।**
**जीवा विक्षेपगुणा हृताऽन्त्यकर्णेन विक्षेपः ॥५॥**

इयमार्य्या उदयास्तमयाध्याये व्याख्याता। अधुना ग्रहयोरन्तरपरिज्ञानमाह—

**एकान्यदिशोरन्तरयोगैर्विक्षेपयोर्ग्रहान्तरकम्।**

एकादिकान्यदिकयोर्दिशोर्यथासंख्यमन्तरयोगः। अन्तरं विवरं योगो युतिः कार्य्या। कयोर्भणति। विक्षेपयोरेकदिक् वियोगः। भिन्नदिक् योगः कार्य्य इत्यर्थः। ग्रहयोरन्तरं ग्रहान्तरं ग्रहयोर्विवरमिति वाक्यार्थः।

करणम्। यस्मिन् काले ग्रहौ समलिप्तीभूतौ तस्मिन् काले कुजगुरुसौराणामन्यतमस्य समलिप्तग्रहात् पातं विशोध्य विक्षेपः कार्य्यः। बुधशुक्रयोस्तु समलिप्तकालिकात् शीघ्रात् स्वपातं विशोध्य विक्षेपः कार्य्यः। एवं ग्रहचन्द्रयोरपि विक्षेपौ कृत्वा ततस्तयोर्विक्षेपयोरेकदिक्स्थयोरन्तरं कार्य्यम्। भिन्नदिक्स्थयोर्योगः। एवमन्तरं योगं वा कृत्वा ततस्तस्मात् ग्रहयोर्मानैक्यार्द्धं विशोध्य शेषस्य षष्ट्याभागमपहृत्य हस्ता लभ्यन्ते। (१ हस्तः $=६०$ कलाः तदैकाङ्गुलिः $=२\frac{१}{२}$ कलाः) शेषं द्विगुणं पञ्चभिर्विभज्याङ्गुलानि लभ्यन्ते। तावदन्तरयोः ग्रहयोर्यस्योत्तरो विक्षेपः स उत्तरेण यस्य दक्षिणः स दक्षिणेन। यद्योभयोरप्युत्तरो विक्षेपः तदा यस्याधिकः स दक्षिणेन। इतरमुत्तरेण। अथ चन्द्रमसा सहान्यतमस्य ग्रहस्य समागमः क्रियते। तदा चन्द्रमसश्चन्द्रग्रहणोक्तेन विधिना विक्षेपं कृत्वा

च निरूप्यमिति। अथ विक्षेपयोरन्तराद् योगाद् वा ग्रहयोर्मानैक्यार्द्धं न शुध्यते तदोर्ध्वस्थो ग्रहोऽधःस्थेन ग्रहेण छाद्यते इति।

अथोदाहरणम्—तद् यथा। चन्द्रशुक्रयोः समागमः क्रियते। ततः समलिप्तकालिकं शुक्रशीघ्रमिदं ४।२७।५२।२८। अस्माच्च पातेनोदयास्तमयोक्तेन विधिना स्फुटविक्षेप उत्तरः १४।३६ चन्द्राच्च समलिप्तात् स्वपातेन चन्द्रग्रहणोक्तेन विधिना विक्षेपो दक्षिणः। २३।२४। अनयोर्भिन्नदिक्त्वादैक्यं जातम् २५५। अस्माच्चन्द्रशुक्रयोर्मानैक्यार्द्धमिदं १७।५५ संशोध्य शेषं २२७।५ अस्य षष्ट्या भागे हृते हस्ताः ३। शेषस्य द्विगुणस्य पञ्चभिर्भागे हृतेऽङ्गुलानि १८। एतदन्तरं चन्द्रशुक्रयोः। शुक्रस्योत्तरो विक्षेपः अस्मादुत्तरेण शुक्रः। चन्द्रस्य दक्षिणो विक्षेपः। अस्मात् दक्षिणेन चन्द्रमाः। अथ यत्र विक्षेपयोरन्तराद् योगाद् वा मानैक्यार्द्धं न शुध्यते तत्रार्कग्रहणवदिति तदर्थमाह—

## ग्रहणवदन्यत् साध्यं स्फुटविक्षेपोऽवनत्येव ॥६॥

ग्रहणेन तुल्यं ग्रहणवत्। अर्कग्रहणेन तुल्यमित्यर्थः। अन्यदिति अत्र नोक्तं शेषमित्यर्थः। साध्यं साधनीयम् स्फुटविक्षेपोऽवनत्यैवेति। अवनत्यर्कग्रहणवत् स्फुटविक्षेप इति यथा। इति व्याख्यार्थः।

करणम्—यत्र विक्षेपान्तरयोर्योगाद् वा ग्रहयोर्मानैक्यार्द्धं न शुध्यते तत्रोर्द्धस्थो ग्रहोऽधःस्थेन छाद्यते इति। तद् यथा। तत्र तावत् सर्व्वेषामुपरि सौरस्य कक्षा। तदधो गुरोः। तदधः कुजस्य। तस्मादप्यर्कस्य। तदधः सितस्य। तदधः सौम्यस्य। सौम्यादधश्चन्द्रस्य एवं शनिगुरुकुजार्कसितेन्दुजचन्द्रमसां क्रमेणाधो व्यवस्थिताः कक्षाः। ततः ऊर्द्धस्थं ग्रहमर्कं परिकल्प्य अधस्थश्चन्द्रमाः। ततो ग्राह्यदिनप्रमाणं ज्ञात्वा तस्मिंश्च काले कियान् ग्राह्यदिनस्य गत इति। ततः समागमकालममावास्यान्तं परिकल्प्य ग्राह्यादभुक्तभागैर्लग्नं कार्य्यम्। तद्विविभं ज्ञात्वा तस्माद् वित्रिभलग्नेति पुरःसरकर्म्मणा लम्बनं कार्य्यम्। तत्र समागमकाले ऋणमधिके धनमूने प्राग्वेति धनमृणं वा कार्यम्। एवं कृते समागमकालः स्फुटो भवति। ततस्तस्मिन् काले ग्राह्यतात्कालिकं ज्ञात्वा पुनरपि लग्नं कार्यम्। तस्माद्विविभलग्नेति पुरःसरकर्मणालम्बनं कार्यम्। तेन भूयोऽपि

समागमकालः संस्कार्य्यः। एवमसकृत् कर्म्मणा संस्कृतः समागमकालः स्फुटो भवति। ततः समलिप्तौ स्फुटसमागमकालिकौ कृत्वा वित्रिभलग्नं च ततो "वित्रिभलग्नापक्रमविक्षेपांशयुतिविश्लेषोना" इत्यवनतिः कार्य्या। ततस्तात्कालिकात् ग्रहादुदयास्तमयोक्तेन विधिना स्फुटविक्षेपः कार्य्यः। ततस्तयोरवनति-ग्रहविक्षेपयोरेकदिक् योगः। भिन्नदिक् वियोगः कार्य्यः। तौ स्फुटविक्षेपौ भवतः। ततस्तस्मिन् काले ग्रहयोर्मानैक्यार्द्धं वक्ष्यमाणेन विधिना। ततो ग्राह्यग्राहकमानयोर्योगार्द्धात् स्फुटविक्षेपं संशोध्य शेषो ग्रासः। स यदि ग्राह्यादधिको भवति तदोर्द्ध्वस्थो ग्रहोऽधःस्थेन ( छादितो ) दृश्यते। यथोनस्तदा खण्डग्रहणमिति। एवं परिज्ञाय ततः "छाद्यार्द्धेन छादकदलसंयुक्तोनकस्य वर्गाभ्याम्। विक्षेपकृतिं प्रोह्य पदे तिथिवत् स्थिति-विमर्दार्द्धे" इति स्थित्यर्द्धविमर्द्दार्द्धे कार्य्ये। ततो भुक्तिः षष्टिहृतेति तस्य संवादः।

इति भट्टमधुसूदनसुत-चतुर्व्वेद-पृथूदकस्वामिकृते खण्डखाद्यविवरणे समागमाध्यायोऽष्टमः॥

---

अथ खण्डखाद्यकोत्तरं प्रारभ्यते ।

अक्रुतार्य्यभटः शीघ्रगमिन्दूच्च पातमल्पगं स्वगतेः ।
तिथ्यन्तग्रहणानां घुणाक्षर तस्य संवादः ॥
मध्यगतिज्ञं वीक्ष्य श्रीषेणार्य्यभटविष्णुचन्द्रज्ञाः
सदसि न भवन्त्यभिमुखाः सिंहं दृष्ट्वा यथा हरिणाः ॥
दूरभ्रष्टाः स्पष्टाः श्रीषेणार्य्यभटविष्णुचन्द्रेषु ।
यस्मात् कुजादयस्ते न च विदुषामादरस्तस्मात् ।

इत्येवमादिष्विति । तत्रादाविवार्कमन्दोच्चमाह—

भानुमतोमन्दोच्चं राशिद्वयमंशकाश्च सप्तदश ।

आदित्यस्योत्तरे मन्दोच्चं राशिद्वयं सप्तदशभागाः २।१७। अधुना चन्द्रो-च्चानयनमाह—

द्युगणात् खरुद्रगुणिताद् भवशरयुक्ताच्छशिशिखाग्निहृतात् ।
भगणादि फल शोध्यं मध्यमचन्द्राच्छशाङ्कोच्चम् ॥

द्युगणादहर्गणादित्यर्थः । खरुद्रगुणितादिति । खं च रुद्राश्च खरुद्रा-स्तैर्गुणिताः खरुद्रगुणिताः । तस्मात् । शशिशिखाग्निहृतादिति शशी च वयश्च अग्नयश्च शशिशिखाग्नयः तैर्हृतात् । शशिशिखाग्निहृतात् । भगणादि फलमिति । भगणा आदौ यस्य फलस्य तद् भगणादिफलम् । तच्च शोध्यं शोधनीयमित्यर्थः । कुतो भणति । मध्यमचन्द्रात् । मध्यमात् चन्द्रात् शेषं शशाङ्कोच्चम् । शशाङ्कस्य उच्चं शशाङ्कोच्चमिति वाक्यार्थः ।

करणम्—इष्टदिने अहर्गणं संस्थाप्य खरुद्रैर्गुणनीयः । दशाधिकेन शतेनेत्यर्थः । ततो भवशरा योज्याः । पञ्चशतान्येकादशाधिकानीत्यर्थः ।

ततः शशित्रिखाग्निभिर्विभजेत्। त्रिभिः सहस्रैरेकत्रिंशदधिकैः इत्यर्थः। अवाप्तं भगणास्त्याज्याः। शेषं द्वादशभिः संगुण्य शशित्रिखाग्निभिर्विभज्य राशयो लभ्यन्ते। शेषं त्रिंशता संगुण्य पूर्व्वोक्तवद् विभज्य भागा लभ्यन्ते। शेषं षष्ट्या संगुण्य लिप्ताः। शेषं षष्ट्या संगुण्य विलिप्ताः। एवं राश्याद्यं चन्द्रमसः केन्द्रं भवति। तच्च मध्यमचन्द्रात् संशोध्य शेषं चन्द्रोच्चं भवति।

अस्योदाहरणम्। तद् यथा—इष्टदिनेऽहर्गणोऽयम् ७२७०८ खवह्नैर्गुणितो जातः ७८८७८८० अस्मिन् भवशराः क्षिप्ताः ७८८८३८१ अस्य शशित्रिखाग्निभिर्भागे हृते भगणशुद्धशेषम् २३१२ अस्माद् ग्रहवच्चन्द्रमसः केन्द्रमागतमिदम् १०।१०।२१।१० एतन्मध्यमचन्द्रादस्मात् २।१५।२।५४ संशोध्य शेषम् ४।४।४१।४४। एवं चन्द्रोच्चमुत्तरकृतम्। अथ भुक्त्यर्थमहर्गणः १। खवह्नैर्गुणितो जातः ११० अस्य शशित्रिखाग्निभिर्भागे हृते राश्यादिकेन्द्रभुक्तिः ०।१३।३।५४ एतच्चन्द्रभुक्तेः संशोध्य शेषम् ०।०।३।४०। एषा चन्द्रोच्चभुक्तिरिति।

अधुना पातानयनमाह—

> साद्र्धकृतेषुगुणोनादहर्गणाद् द्विनवमुनिरसैर्भक्तात्।
> यन्मण्डलादि लब्धं चक्रात् संशोध्य तत्पातः ॥२॥

सार्द्धाश्च ते कृताश्च सार्द्धकृताः। सार्द्धकृताश्च इषवश्च गुणाश्च सार्द्धकृतेषुगुणाः। तैरूनः सार्द्धकृतेषुगुणोनः। तस्मात् सार्द्धकृतेषुगुणोनात्। अहर्गणाद् दिनसमूहादित्यर्थः। द्विनवमुनिरसैर्भक्तस्तस्माद् द्विनवमुनिरसैर्भक्तात्। यन्मण्डलादि लब्धं भगणाद्यवाप्तमित्यर्थः। ततः संशोध्य। कुतश्चक्राद् राशिद्वादशकादित्यर्थः।

करणम्—इष्टदिनाहर्गणं संस्थाप्य स सार्द्धकृतेषुगुणैरूनः कार्य्यः। त्रिभिः शतैः चतुःपञ्चाशदधिकैस्त्रिंशद्विघटिकाभिरित्यर्थः। एवं कृत्वा द्विनवमुनिरसैर्भागमपहृत्य भगणादि फलं ग्रहवदानीय तत् फलं चक्रादपास्य शेषं पातो भवति। उत्तरकृतश्च पातो भवति। उत्तरकृताच्चन्द्रपातात् वक्ष्यतिः कला न शोध्या इति।

उदाहरणम्—इष्टदिनाहर्गणोऽयं ७२७०८ अस्मात् सार्द्धकृतेषुगुणोनात्।

३५४।३० संशोध्य शेषम् ७२३५३।३० अस्माद्दिनवमुनिरसैरेतैः ६७९२ भागे हृते ग्रहवद् राश्यादि फलमिदम् ७।२४।५९।२८ एतच्चक्रात् संशोध्य शेषम् ४।५।०।३२ एष उत्तरकृतचन्द्रपातः। अस्मात् षष्ठवति कला न शोध्यन्ते। अथ पातभुक्त्यानयनेऽहर्गणः—

अस्माद् द्विनवमुनिरसैर्भागे हृते सति ग्रहवद् राश्यादिका पातभुक्तिः ०।०।३।१०। अधुना सर्वत्र ज्याखण्डकानां संस्कारार्थमार्य्यामाह।

**गतभोग्यखण्डकान्तरदलविकलवधात् शतैर्नवभिराप्ता।**
**तद्युतिदलं युतोनं भोग्यादूनाधिकं भोग्यम्॥**

गतखण्डकं च भोग्यखण्डकं च तयोरन्तरं गतभोग्यखण्डकान्तरं तस्य दलं गतभोग्यखण्डकान्तरदलम्। गतभोग्यखण्डकान्तरदलेन विकलस्य वधः। गतभोग्यखण्डकान्तरदलविकलवधः। तस्मात् नवभिः शतैराप्तिर्लब्धिः। तयाप्तया युतोनं किं तत् युतिदलम्। तथा खण्डकयो युतिः। तद् युतिः। गतभोग्यखण्डकयोर्युतिरित्यर्थः। तस्या युतेर्दलम्। तद्युतिदलम्। तया युतोनम्। कया गतभोग्यखण्डकान्तरदलविकलवधात् शतैर्नवतिराप्तया इति भोग्यादूनाधिकमिति। तद् युतिदलं भोग्यादूनमधिकं कार्य्यं भोग्यादूनाधिकं चोनमिति। एवं कृते भोग्यखण्डकं लभ्यते इत्यार्य्यार्थः।

करणम्—ज्याकेन्द्रस्य लिप्तापिण्डीकृतस्य नवभिः शतैर्भागे हृते यावत् संख्यान्यङ्कान्यवाप्तानि तावत्संख्याकानि ज्याखण्डानि स्थाप्यानि। ततो लब्धज्याखण्डस्य पूर्व्वखण्डं संस्थाप्य तथालब्धं पुनरप्यन्तरम् एवं त्रयाणां स्थापितानां तृतीयाद् द्वितीयं विशोध्य भोग्यखण्डं भवति। द्वितीयात् प्रथमं स्थापितं विशोध्य गतखण्डं भवति। एवं विंशत्सनवेति ज्याखण्डानां कार्य्यम्। तदन्तरमर्द्धीकृत्य ततस्तेन ज्याशुद्धशेषं विकलसंज्ञमनष्टं संगुण्य नवभिः शतैर्विभज्यावाप्तं लिप्तादिफलं भवति। ततस्तयोः खण्डकयोर्योगं कृत्वार्द्धं कार्य्यम्। तद् यदि भोग्यखण्डका भवन्ति तदा लब्धेन फलेनाधिकं कार्य्यम्। अथ भोग्यखण्डकाधिकं भवति तदा लब्धेन फलेनोनं कार्य्यम्। एवं कृते यद् भवति तद्भोग्यखण्डकं स्फुटं भवति। तेन भोग्यखण्डकेन पूर्व्ववत् कर्म्म कर्त्तव्यमिति।

एतच्च विशेषेण व्याख्यायते। तद् यथा। अर्कस्फुटोकरणे इष्टदैवसिकमिष्टकालिकं देशान्तरकृतं मध्यमार्कं संस्थाप्य ततस्तस्माद् राशिद्वयमंशकाश्च सप्तदशार्कमन्दोच्चं विशोध्य केन्द्रं भवति। तस्माद् ज्याकेन्द्रं कृत्वा तन्निशापिण्डीकार्य्यं तस्य नवभिः शतैर्भागे हृते यद्येकमपि ज्या·खण्डकं न लभ्यते तदा गतभोग्यखण्डकान्तरादिकर्म्माभावः। पञ्चत्रिंशता विकलं संगुण्य नवभिः शतैर्विभज्याावाप्तं द्विकृतांशो धनं कृत्वा विकलं भवति। आदावेकं लभ्यते तदा पृथक्स्थस्य विकलस्य षड्भिः शतैर्भागमपहृत्यावाप्तं तदा त्रिंशतः सार्द्धायाः संशोध्य स्फुटभोग्यखण्डं स्फुटं भवति। अथ त्रीणि भोग्यखण्डानि लभ्यन्ते तदा विकलस्य शतद्वयेन सप्तपञ्चाशदधिकेन भागमपहृत्यावाप्तं चतुर्विंशतेः सार्द्धायाः संशोध्य स्फुटभोग्यखण्डं भवति। अथ चत्वारि ज्याखण्डानि लभ्यन्ते तदा विकलस्य तत्त्वयमैर्भागमपहृत्यावाप्तं सप्तदशभ्यो विशोध्य स्फुटं भोग्यखण्डं भवति। अथ पञ्च लभ्यन्ते तदा विकलस्य तत्त्वयमैर्भागमपहृत्यावाप्तं लब्धं ज्याखण्डैः संयोज्य द्विकृतांशोनं कृत्वा रविफलं भवति। एवं यथोत्पन्नेन भोग्यखण्डेन रविमध्यमभुक्तिं संगुण्य नवभिः शतैर्भागमपहृत्यावाप्तं द्विकृतांशोनं कृत्वा रविभुक्तिफलं भवति। शेषं पूर्व्ववदेतत् रविस्फुटीकरणम्।

अथ चन्द्रमसः। इष्टदैवसिकादिष्टकालिकमध्यमचन्द्राद्दुत्तरकृतमन्दोच्चं विशोध्य केन्द्रं भवति। तस्माद् ज्याकेन्द्रं कृत्वा तन्निशापिण्डीकार्य्यम्। तस्य नवभिः शतैर्भागे हृते यद्येकमपि ज्याखण्डं न लभ्यते तदा विकलं सप्तसप्तत्या संगुण्य नवभिः शतैर्भागमपहृत्यावाप्तं दस्रेषुभागयुतं कृत्वा चन्द्रफलं भवति। अथैकज्याखण्डं लभ्यते तदा विकलस्य त्रिभिः शतैर्भागमपहृत्यावाप्तं चतुः सप्ततेः संशोध्य स्फुटं भोग्यखण्डं भवति। अथ त्रीणि ज्याखण्डानि लभ्यन्ते अथ चत्वारि ज्याखण्डकानि लभ्यन्ते तदा विकलस्य शतेन षड्दृतेन भागमपहृत्यावाप्तं विंशत्या विशोध्य स्फुटं भोग्यखण्डं भवति। एवं यथोत्पन्नेन ज्याखण्डेन विकलं संगुण्य नवभिः शतैर्भागमपहृत्यावाप्तं भुक्तज्याखण्डे संयोज्य दस्रेषुभागयुतं कृत्वा चन्द्रफलं भवति। एवं यथोत्पन्नेन ज्याखण्डेन शशिनः केन्द्रभुक्तिं संगुण्य नवभिः शतैर्भागमपहृत्यावाप्तं दस्रेषुभागयुतं कृत्वा चन्द्रभुक्तिफलं भवति। शेषं पूर्व्ववत्। तद्

यथा। ज्याकेन्द्रस्य लिप्तापिण्डीकृतस्य नवभिः शतैर्भागे हृते एकमपि ज्याखण्डं न लभ्यते तदा विकलं त्रिभिः शतैः षष्ठ्याधिकैः संगुण्य नवभिः शतैर्विभज्यावाप्तं तत् क्रान्तिफलं भवति। अथैकज्याखण्डं लभ्यते*

---

* आदर्श-पुस्तकमसम्पूर्णमिति।

# खण्डखाद्यके भट्टोत्पलपठिता अतिरिक्तश्लोकाः

## प्रथमाध्याये

पृथूदकग्रन्थस्य चतुर्दशश्लोकात् परम—

रूपं द्युगणं हत्वा गुणकारैर्भागहारकैः कथितैः ।
शोध्यक्षेपविवर्ज्यं ग्रहस्य कुर्याद्दिवसभुक्तिम् ॥१६॥

पृथूदकग्रन्थपञ्चदशश्लोकात् परम्—

त्रिज्यादलमिकज्या तद्द्योगगुणैक्यगुणाद्विज्या ।
उत्क्रमक्रमगुणैकज्या ततो मूलमिष्टज्या ॥१८॥

पृथूदकग्रन्थाष्टादशश्लोकात् परम्—

आद्यतोयान्तविकल्पं विशोधयेत् षड्भ्यः ।
षड्धिकमूनं षड्भिर्नवाधिकं विशोधयेच्चक्रात् ॥२३॥
लिप्ता खखनन्दहृता लब्धं पिण्डं न्यसेच्छेषात् ।
भोग्यान्तरेण गुणितात् प्राग्वद्भुक्तात् फलं क्षिपेन्न्यस्ते (मध्ये) ॥२४॥

पृथूदकग्रन्थोत्तराध्यायप्रथमश्लोकात् परम—

न स्फुटमार्य्यभट्टोक्तं स्पष्टीकरणं यतस्ततो वक्ष्ये ।
भानुमतो मन्दोच्चं राशिद्वयमंशकाश्च सप्तदश ॥२५॥

पृथूदकग्रन्थोत्तराध्याय-द्वितीयश्लोकात् परम—

पञ्चगुणा यमरामा वसुपक्षा भूयमाः क्षपानुभुवः ।
पञ्चेत्युत्तरकर्मणि भानोः स्फुटखण्डकाः कथिताः ॥३०॥
सप्तनगाः शशिमुनयश्चन्द्ररसाः सप्तसागराः शशिनः ।
खगुणाः पुष्करचन्द्राः सौम्याः स्युः खण्डका सोमे ॥३१॥
गतभोग्यखण्डकान्तरदलविकलवधाच्छतैर्नवभिराप्तया ।
तद्युतिदलं युतोनं भोग्याद्वूनाधिकं भोग्यम् ॥३२॥

द्विज्ञतांशोनं रविफलमिन्दोर्द्विस्रेषुभागयुतम् ।
अर्कफलभुक्तिघाताद् भगणकलाप्तं भुजान्तरं रविवत् ॥३३॥

पृथूदकग्रन्थे चतुर्विंशश्लोकात् परम्—

रात्रिदलात् संशोध्य प्रदिष्टो दिवागतं मिश्रात् (?) ।
मिश्रे फलाद् विशोध्य चयावशेषे प्रवृत्तं भम् ॥३४॥
गम्यफलं खरसेभ्यः शुद्धा शेषस्य गतफलस्य यथा ।
छेदं कुर्यादथवा रात्र्यर्धे नियोजयेत् गम्यम् ॥३५॥

पृथूदकग्रन्थे सप्तविंशश्लोकात् परम्—

रविचन्द्रयोर्गलिप्ताः खखवसुभिर्भाजिताः फलं योगाः ।
गतगम्ये षष्टिगुणे गतियोगविभाजिते नाड्यः ॥४०॥
गतभोग्यकला भक्ताः स्फुटभुक्त्याप्तं दिनादिकः कालः ।
ज्ञेयो ग्रहसंक्रान्तेश्छेदो नक्षत्रवत् तस्य ॥४१॥
मानार्धात् षष्टिगुणाद् भुक्तिहृतान्नाडिकादिलब्धेन ।
राश्यन्तात् प्रागादिपश्चादन्तोऽर्कस्य संक्रान्तेः ॥४२॥
संक्रान्तिपुण्यकालो यल्लब्धं नाडिकादि तद्द्विगुणम् ।
स्नानजपहोमदानादिकोऽपि धर्मोऽत्र विशिष्टफलम् ॥४३॥
शाकं द्विस्थं कृत्वा त्रिंशद्विर्वासरैस्ततो हत्वा ।
भूयः सहितं कृत्वा गुणाङ्गनागाब्धिभिर्हृत्वा ॥४४॥
व्योमार्थैर्नवरूपैः समादि यत् सविकलं ततो लब्धम् ।
युक्तास्तस्मिन् षष्ट्या शेषे प्रभवादयोऽब्दाः स्युः ॥४५॥
शशक्षिभवविहीनाद्युगणात् खत्र्यग्निभाजितादाप्तम् ।
त्रिघ्नं सैकं सप्तविभक्तं सावनवर्षाधिपोऽर्कादिः ॥४६॥
शशिमुनिहीनात् त्रिंशद्विभाजितात् फलमहर्गणाद्द्विगुणम् ।
सैकं सप्तविभक्तं सावनमासाधिपोऽर्कादिः ॥४७॥
.पार्कोन-लग्नहोरा पञ्चगुणा सविकला यदि स्वरूपा ।
सप्तविभक्ताशेषो दिनाधिपाद्यः स कालहोरेशः ॥४८॥
त्रिचतुरन्तरषष्ठाः सावनमासाब्ददिवसहोरेशाः ।
दिनगतघटिका द्विगुणाः पञ्चहृता वाऽन्यतममेतत् ॥४९॥
खखखशरा अम्बहता व्यासार्धहृताः स्फुटपरिणाहः ।

## द्वितीयाध्याये

पृथूदकग्रन्थसप्तदशश्लोकात् परम्—

शीघ्रादंशकपिण्डात् क्रमोत्क्रमाच्चरखण्डकाच्छुद्धाः ।
यत्र न शुध्यति भागो हार्य्यस्तेनैव तत्फलहतश्च ॥१६॥
विकलस्याप्तं योज्यं फलयोगे धनमृणं पृथक् कृत्वा ।
तद्विवराच्छेषं तेयो (?) ग्रहशैघ्रं ॥

पृथूदकग्रन्थसप्तमश्लोकात् परम्—

भोग्यफलेन ग्रहवक्रमुक्त्यर्थं साधयेत् फलं मान्दम् ।
विनियोगः पूर्व्वोक्तः स्यात् स्वं चयादृणं कुर्य्यात् ॥

पृथूदकग्रन्थोनविंशश्लोकात् परम्—

उदयादि ध्रुवकाणामन्यतमेनान्तरं तुरीयस्य ।
केन्द्रस्य कला भक्ता छेदेनाप्तं दिनाद्यतीतेष्यम् ॥
सप्तदशांशैरधिकं भौमस्योच्चं गुरोर्दशभिरंशैः ।
सितशीघ्रात् कृतमुनयो लिप्ताः शोध्याः शनेः फलं मान्दम् ॥२४॥
पञ्चांशोनं शैघ्रं षोडशभागाधिकं बुधस्य फलम् ।
भुक्तगतिफलांशगुणा भोग्यगतिर्भुक्तगतिहृताल्लब्धम् ॥२५॥
भुक्तगतैष्यफलभागास्तद्भोग्यफलान्तरार्द्धहतविकलम् ।
भोग्यगतिहृतलब्धेनाधिकं फलैक्यार्द्धम् ।
भोग्यफलादधिकोनं तद्भोग्यफलं स्फुटं भवति ॥२६॥

## तृतीयाध्याये

पृथूदकग्रन्थस्य प्रथमश्लोकात् परम्—

ज्याकेन्द्रं स्फुटभानोः कृत्वा ये राशयश्चरार्द्धानि ।
भुक्तानि भोग्यगुणिताच्छेषात् खखषट्तिहृत्याप्तफलं विकलम् ॥२॥
गतिपादं पादोनगतिं विशोध्यास्तत्कालमुदये च ।
संसाध्य येऽन्तस्य ग्रहस्य चरकर्म्मचाऽन्यस्य (?) ॥३॥

पृथूदकग्रन्थस्य तृतीयश्लोकात् परम्—

मिश्रेष्टान्तरगुणिता भुक्तिर्दिवसे निशादले प्रथमे ।
रात्र्यर्द्धेऽभीष्टान्तरहृता परे त्विष्टमिश्रयोगेन ॥६॥
मिश्रेणोदयकाले रात्र्यर्द्धेनास्तमयकाले ।
षष्ट्या विभज्य लब्धं विशोध्य तात्कालिको ग्रहो भवति ॥७॥

पृथूदकग्रन्थस्य पञ्चमश्लोकात् परम्—

तात्कालिकार्कराशेर्भोग्यकलास्तत्प्रमाणसङ्गुणिताः ।
खखवसुशशिभिर्लब्धं विशोधयेत् प्रश्नचषकेभ्यः ॥१०॥
संयोजशाभुक्तमिनैस्तत्परतः शोधयेत राश्युदयान् ।
यावन्तः संशुद्धास्तावन्तो राशयोऽक्षेप्याः ॥११॥
सूर्ये शेषं विभजेदशुद्धचषकैः खरामसङ्गुणितम् ।
लब्धं भगणादि रवौ प्रक्षिप्य तथाकृते लग्नम् ॥१२॥
सूर्यादभुक्तभागैर्लग्नाङ्कैः प्रसाध्य यल्लब्धिम् ।
तद्योगे राश्युदयान् तदन्तरस्थान् क्षिपेत् कालः ॥१३॥
रात्रिगते षड्भयुतादर्काद्दिनवत् प्रसाधयेल्लग्नम् ।
दिनलग्ने यद्विहितं तद्विपरीतं निशाशेषे ॥१४॥
लब्धेरूने काले तमेव भक्तार्कराशिमाने ।
प्रागवल्लब्धं सूर्ये दत्वा लग्नं तदन्तरकम् ॥१५॥
तद्राशिमानगुणितं खखाष्टरूपैर्विभाजितं कृत्वा ।
लब्धं कालं विन्द्यान्निशार्द्धं दिनमानसंयुतम् ॥१६॥

पृथूदकग्रन्थस्य दशमश्लोकात् परम्—

पृष्ठस्थमात्मगुणितं तेनैवाधः स्थितं भजेत् खगुणैः ।
लब्धं क्षिपेदथोपर्यधः स्थितो द्विगुणितो वर्गः ॥२२॥

पृथूदकग्रन्थस्य सप्तमश्लोकात् परम्—

चापानयने नवशतविकलवद्भोग्यलिप्ताभिः ।
कृत्वा भोग्यं त्वसकृल्लब्धं कलाविकलचापम् ॥२६॥
ज्याशुद्धविकलमाहतमम्बरखाष्टैरशुद्धखण्डहृतम् ।
लब्धं द्वितीयविकलं गतभोग्यान्तरदलेन हतम् ॥२७॥

खाम्बरमन्दविभक्तं प्राग्वल्लब्धेन भोग्यखण्डाख्यम् ।
असकृत्सकृदेवं विकलं कुर्य्यात् स्थिरं यावत् ॥२८॥
उक्तरविधिना सूर्य्यस्य क्रान्तिधनु: सुसंस्कृतेष्वविखिलम् ।
विप्रश्नं विहितं स्यादत: पृथक् तस्य नो कथनम् ॥२९॥

पृथूदकग्रन्थस्य षोड़शश्लोकात् परम्—

त्रिंशत्सनवार्थनगा(२९।७५)स्तर्कदिशो (१०६)
व्योमवह्निशीतकरा: (१३०) ।
बाणाब्धिभुव: (१४५) खशरेन्दवश्च (१५०) कला: पिण्डा: ॥३४॥
मूले द्व्यङ्गुलविपुल: सूक्ष्मशो द्वादशाङ्गुलोच्छ्राय: ।
शङ्कुस्तलाग्रविद्धो ग्रहवेधसमस्तरज्जुधार्य्य: ॥३५॥
घटिका कलशार्द्धाकृतिताम्रपात्रं तलेऽगुरुच्छिद्रा ।
मध्ये तज्जलमज्जनषष्ट्या द्युनिशं यथा भवति ॥३६॥

## चतुर्थाध्याये

पृथूदकग्रन्थस्य प्रथमश्लोकात् प्रागेव—

दिनवृन्दात् खशरघ्नात् षरवरविभिर्विभाजितादाप्तम् ।
रामर्त्तखेन्दुसहितं क्षिपेद् द्युवृन्दे भजेत् खर्ष्टतिभिस्तत् ॥१॥
लब्ध: कमलजपूर्व्व: पर्वगणः सप्तभाजितः शेष: ।
खरामासोत्तरवृद्धा पर्वेशा: सप्तदेवता: क्रमश: ॥२॥
ब्रह्मशशीन्दुकुबेरा वरुणाग्नियमाश्च विज्ञेया: ।
गतगम्ये तिथ्यूने खगुणोनैवेन्दुसूर्यपर्वस्यात् ॥३॥
तिथिगतगम्ये भुक्तिगुणे भुक्त्यन्तरहृते फलान्वयुतौ ।
रविशशिनौ समलिप्तौ पातस्तात्कालिकोऽन्यथा भवति ॥४॥

पृथूदकग्रन्थस्य पञ्चमश्लोकात् परम्—

अर्शाविमोक्षनं स्थितिदलविमर्दार्धहीनात्(?)पश्चात ।
मोक्षादर्वाग्मोक्षनं विमर्दस्तदर्धैक्यम् ॥

पृथूदकग्रन्थस्य षष्ठश्लोकात् परम ब्राह्मस्फुटसिद्धान्त-चतुर्थाध्यायस्य ११श-१५श श्लोकाः पठिताः।
ततः भट्टोत्पलग्रन्थे पठिता इमे श्लोका लभ्यन्ते—

इष्टग्रासेऽर्केन्द्वोर्निमीलनोन्मीलने कार्य्याः ( कार्य्ये ? )।
भुजकोटिश्रवणाख्याः परिलेखार्थं सदा गणकैः॥
चन्द्रोदयास्तलग्ने प्रसाध्य तदुदयैर्विलग्नमस्तमयम्।
उदयैः कृत्वा शशिनो दिनमानं सुस्फुटं भवति॥
पञ्चदशेभ्योऽभ्यधिका नतघटिकाः शोधयेत् खरामेभ्यः।
शेषादुत्क्रमजीवा प्राग्वगर्णं कारयेत् कालात्॥
क्रान्त्यंशकलैर्विलोमस्थितैर्ग्रहात् सत्रिभात् सदा क्रान्तिः।
कुर्य्याज्जीवाखण्डैर्ज्याभुक्तैक्यमेतेषाम्॥

पृथूदकग्रन्थस्य सप्तमश्लोकात् परम्—

एकान्यदिशोर्नतिवियुतैर्ज्यो ग्रग्रहणान्मध्यमोक्षेषु।
वलनं निमीलनोन्मीलनेष्टफलेष्वतोऽन्यदिशाम्॥

## पञ्चमाध्याये

पृथूदकग्रन्थद्वितीयश्लोकात् परम— ब्राह्मस्फुटसिद्धान्त-पञ्चमाध्यायस्य सप्तमश्लोकः पठितः।
ततः परम—

यदि भत्रयं न शुध्यति चक्रं दत्वा ( चक्रयुताद् ? ) विशोधयेल्लग्नात्।
सूर्य्यादूनो वाच्योऽधिकोऽपि गतत्रिभो नित्यम्॥

पृथूदकग्रन्थस्य षष्ठश्लोकात् परम्—

लम्बनान्तरसंयुक्तं स्थित्यर्द्धं मध्यमाधिके।
स्पार्शिके मौक्षिके ह्योने ऋणैकत्वेऽन्यथाधने॥
स्पार्शिके मध्यमाद्धीने मौक्षिके त्वधिके युतम्।
स्थित्यर्धं विवरेणैव धनैकत्वेऽन्यथा ऋणे॥
भेदे तदैक्येन युतं स्थित्यर्धं कारयेद् बुधः।
एवमेव विमर्दार्द्धं स्पष्टीकार्य्यं तथा बुधैः॥

( एते अनुष्टुभा ग्रथिता ब्रह्मगुप्तकृता न भवन्ति)

ततः परं ब्राह्मस्फुटसिद्धान्त-पञ्चमाध्याय १४श-१९श श्लोका भट्टोत्पलः पठति।

# षष्ठाध्याये

आदावेव भट्टोत्पलग्रन्थे एते श्लोका दृश्यन्ते—

सूर्यगतेर्येषोना गतिः समन्दग्रहोऽन्यथाशीघ्रः ।
उदयास्तमयौ प्राक्पश्चान्मन्दस्यान्यथा तु शीघ्रस्य ॥
प्राच्यामुदयेऽस्ते वा सूर्योदयकालिकं ग्रहं कुर्यात् ।
अपरस्यामेवं सूर्यास्तमयान्तिकं नित्यम् ॥
प्रागूनभुक्तिरूनो दृश्योऽदृश्यो रवेरधिकभुक्तिः ।
पश्चाददृश्योऽधिगतिरधिको दृश्यो ग्रहोऽल्पगतिः ॥

पृथूदकग्रन्थ-सप्तमश्लोकात् परम्—

ऊनादभुक्तभागैरधिकाद्भुक्तैः प्रसाधयेल्लग्नात् ।
तद्योगे कालकलास्तदन्तरादेकराशिकयोः ॥
वेदाद्यष्टाङ्कदिशः पातांशादिगुणाः कुजादीनाम् ।
नवतिथिरसार्कमासा विक्षेपकला दिगभ्यस्ताः ॥
ग्रहवद्बुधसितपातौ तृतीयलब्ध्याधिकोनकस्पष्टौ ।
कुज-जीव-सौरिपातास्तद्विपरीतं चतुर्थांशाः ॥
मानमहत्त्वात् पश्चादुदयोऽस्तमयः सितस्य दशभिः प्राक् ।
पश्चान्मानमहत्त्वादस्तमयोऽष्टभिरुदयः प्राक् ॥
अस्यैवं मनुसूर्ये पठिते कुजजीवसौराणाम् ।
उदयः प्रागस्तमयो मानमहत्वाद् भवति पश्चात् ॥
ताः षड्घ्नाः कालांशास्तैरधिकेऽभ्युदितोऽन्यथाऽस्तमितः ।
दृश्यादृश्यांशेभ्योऽस्तमये तद्व्यत्ययो वाच्यः ॥
अंशान्तरं दशाहतमम्बरशून्याष्टरूपसङ्गुणितम् ।
लब्धाऽऽद्यान्याक्राभ्युदयप्राणैर्विभाजितं लिप्ताः ॥
गतियोगविवरभक्ता दिवसादि फलं विनिर्दिशेल्लब्धं ।
तेन ग्रहार्कलग्ने वासंख्ये सुस्थिरे यावत् ॥
प्रतिदिनमुदयास्तमयावसक्तत्तात्कालिकग्रहविलग्नैः ।
सूर्यास्तमयादधिकैः शीतांशोः पौर्णमास्यां च ॥

अन्तरघटिका गुणिता भुक्तिः षष्ट्या हृता फलं शोध्यम् ।
अस्तादभ्युदयेऽस्ते वा ग्रहार्कयोरन्यथा क्षेप्यम् ॥
तेनार्केण विदध्याल्लब्धं दृक्कर्मसंज्ञकं चषकम् ।
पुनरपि नाद्यः पूर्ववदाभ्यां यावन्ति शेषम् ॥
उदयास्तमयवदिन्दोः कालांशैरर्कसम्मितैर्वाच्यम् ।
क्षीणत्वं पूर्णत्वं तदन्तरं या गतिकला स्यात् ॥
राशिचतुष्केण यदा स्वाक्षांशयुतेन भवति तुल्योऽर्कः ।
उदयोऽगस्त्यमुनेश्चक्रार्द्धाच्छोधितेऽस्तमयः ॥
मिथुनस्य सप्तविंशे भागेऽगस्त्यस्य याम्यविक्षेपः ।
मुनिनगसंख्या भागा रविसंख्यास्तस्यैव कालांशाः ॥
उदयाख्यमगस्त्यमुनेर्लग्नं वृद्धिं नयेत्तथाऽस्ताख्यम् ।
क्षीनं कार्यं नित्यं घटिकाद्वितयेन राश्युदये ॥
उदयाख्यमयसूर्यसंज्ञौ ज्ञेयावेतौ भषट्कयुतमन्यत् ।
घटिकाद्वितयेनैव षड्भागयुतेन मृगहन्तुः ॥
एवं नक्षत्राणां घटिकाद्वितयेन सत्रिभागेन ।
दर्शनमदर्शनं स्यादाद्यन्तसमये तु रविलग्ने ॥
स्वक्रान्त्यंशाः स्वाक्षावनताद्विशोध्यावनताश्च नवतेः स्युः ।
उदयार्कास्तमयार्काद्यद्गुनस्तत्सदा दृश्यम् ॥
षड्विंशे मिथुनांशे चत्वारिंशता मृगव्याधः ।
दक्षिणतो विक्षिप्तस्त्रयोदशास्यैव कालांशाः ॥
ऋक्षाणां मनुसंख्याः कालांशाः प्रथमकर्म सर्वेषाम् ।
दृक्संज्ञकं न कार्य्यं द्वितीयमेषां सदा कार्य्यम् ॥

## सप्तमाध्याये

आदावेव भट्टोत्पलग्रन्थे अयं श्लोकः पठितः—

रविचन्द्रपातलग्नैः स्वक्रान्त्युदयास्तलग्नगतशेषाः ।
घटिकाः खचरार्द्धमभीष्टकालिकैः शीतगोः ज्ञात्वा ॥

पृथूदकग्रन्थस्य प्रथमश्लोकात् परम्—

गोलवशात् स्वक्रान्तिर्या दिक् चन्द्रस्य सैव विज्ञेया ।
गोलेऽर्केन्दोः क्रान्तिर्यस्याधिका स तवस्थः ॥

पृथूदकग्रन्थस्य चतुर्थश्लोकात् परम्—

कृष्णाष्टम्यन्तदलाद्यावच्छुक्लाष्टमीदलं पूर्व्वे ।
तावन्ति तमा (?) सितमसोः सितेऽन्यथावाहुविन्यासः ॥
व्यर्के चन्द्रे कुर्य्यात् परिलेखं मेषतुलां गते पश्चात् ।
पूर्वाभिमुखं कर्कटमकरादिस्थे भुवि समायाम् ॥
परिकल्प्यार्कं विन्दुं तस्माद् बाहुं यथादिशं दत्त्वा ।
बाह्वग्रात् प्राच्यपरा कोटिस्तिर्य्यक् स्थिरं कर्णः ॥
कर्णाग्रे चन्द्रसमं परिलिख्य षड्ङ्गुलं श्रवणगत्या ।
शुक्लप्रवेश्यमध्ये तद्विन्दोः सूत्रकृत् षड्ङ्गुलकम् ॥
नीत्वा तदग्रमन्तः कृत्वा वृत्तं यथा लिखेदिन्दोः ।
मध्ये यानि भवेत् सितासिते सकलके शशिनः ॥

## अष्टमाध्याये

अत्रादावेव भट्टोत्पलग्रन्थे श्लोकोऽयं पठितः—

विरवीन्दूनां युद्धं भौमादीनां समागमः शशिना ।
रविणास्तमय उदक्स्थो जयो दक्षिणे शुक्रः ॥

पृथूदकग्रन्थस्य चतुर्थश्लोकात् परम्—

समलिप्तिकाकात् कृत्वा लग्नं स्वदेशराश्युदयैः ।
ग्रहयोः समलिप्तिकयोः खदिनो दिननाडिकाः प्राग्वत् ॥
ऊनदिनोदितगुणितादधिकदिनादूनदिनहृताल्लब्धम् ।
अधिकं प्रागवुतिरूनं यद्यधिकदिनोदितात् पश्चात् ॥
अन्तरमार्यं भूयोऽप्यभीष्टघटिकाफलेन युतयोश्च ।
प्राक् पश्चाद्दान्तरयोस्तदन्तरैणोद्धृताद्यात् ॥

युत्यान्यमिष्टघटिका गुणिता: फलनाडिकाभिराद्यवशात् ।
प्राक्समलिप्तिकार्कात् पश्चाद्वा ग्रहयुतिर्भवति ॥
स्वदिनघटिकाविभक्तास्तदुदितपरदिवसनाडिकाघात: ।
तुल्यपरोदिताभिर्घटिकाभिर्यदियुतिर्ग्रहयो: ॥
एकान्यदिशोरन्तरयोगे विक्षेपयोर्ग्रहान्तरकात् ।
ग्रहणवदन्यत्साध्यं स्फुटविक्षेपोऽवनत्या च ॥
शशिबुधसितार्ककुजगुरुशशिभानि यथाक्रमस्वकक्षासु ।
तिष्ठन्त्यध:स्थ इन्दु: परिकल्प्य: सूर्य्य ऊर्ध्वस्थ: ॥
मानैक्यदलमध्यात् संशोध्य स्फुटतरं भवति ।
मध्ये षष्टिभक्तं लब्धं हस्तास्तदवशेषम् ॥
छिन्नं पञ्चविभक्तं फलमङ्गुलसंज्ञकं भवति ।
मध्य ऊने मानैक्यार्द्धात् ग्रहयोर्भेदं विजानीयात् ॥
मानैक्यदलात् मध्ये विशोध्य शेषं भवेच्छन्नम् ।
छाद्यादधिके सकलो ह्यूने खण्डात्मको ज्ञेय: ॥
युतिकालं तिथ्यन्तं विविभपूर्व्वं यथा रविग्रहणे ।
लम्बनावनतिविक्षेपस्थित्यर्द्धान्तं यथा कर्म्म ॥
ग्राह्यग्राहकयोरपि रविविक्षेपद्वयं स्फुटं कृत्वा ।
तुल्यान्यदिशोश्च तयोरन्तरयोगौ स्फुटश्च विज्ञेया: ॥
द्वे तिस्र: कलाश्चतस्रो जलाधिके( पे ? ) द्वे च ।
स्फुटमानकला गुणिता व्यासार्द्धेन स्वकर्णहृता ॥

## नवमाध्याये

एषोऽध्याय: भट्टोत्पलग्रन्थ एव पठित:—

मूला जाह्निवैश्वाश्वयुगदितीन्द्रफाल्गुनीद्वितयम् ।
त्वाष्ट्रगुरुवरुणार्द्रानिलपौष्णाख्यैकताराणि ॥१॥
ब्रह्मेन्द्रयमहरीन्दुत्रितयं षड्वह्निभुजगपित्र्याणि ।
वैश्वाषाढाचतुष्कं वासवरोहिण्यो पञ्च ॥२॥

खतारागणमध्ये यास्तारा दृश्यन्तेऽतिदोसतारा: ।
ध्रुवविक्षेपौ तासां कथितौ ता योगताराख्या: ॥३॥

अत:परं भट्टोत्पल: ब्राह्मस्फुटसिद्धान्तस्य दशमाध्यायस्य प्रथमात् द्वादशश्लोकपर्यन्तं पठति।

# दशमाध्याये

एषोऽध्याय: पाताधिकारसंज्ञ इति भट्टोत्पल: पठति।

अत्र श्लोका:—

रविचन्द्रयुतौ वैधृतिव्यतिपातौ भार्द्धचक्रयोर्दिवसा: ।
गतियुतिहृतमूनाधिकक्रमापक्रमांशै: समै: पात: ॥१॥
रविशशिपातगतिघ्नं हीनाधिककर्मचन्द्रगतियुत्या ।
भक्तं फलयुतोनौ रविशशिनावन्यथापात: ॥२॥
तत्क्रान्तिं स्वक्रान्तिं कृत्वाऽर्केन्दो: शशाङ्कविक्षेपम् ।
सूर्यक्रान्तौ चन्द्राद्विपरीतं कारयेन्नित्यम् ॥३॥
तस्य क्रान्तिकलादिशापं चन्द्रो यदाद्यपदे ।
षड्राशितो द्वितीये शोध्यं षड्भिस्तृतीये तु ॥४॥
युक्तं च्युतं चतुर्थे चक्राच्चन्द्रो निशार्धचन्द्रेण ।
विवरं कृत्वा विभजेत् स्फुटभुक्त्याप्तं दिनादिक: काल: ॥५॥
चापशशिनो यदोनो गत एष्यस्त्वाधिके विनिर्दिश्य: ।
पातस्य तेन चार्कोऽर्धरात्रिक: पातकालिक: कार्य्य: ॥६॥
पातस्यैवं भूयोभूय: कुर्य्यादपक्रम: स्थिरो यावत् ।
तुल्य: स एव कालो मध्यं व्यतिपातवैधृतयो: ॥७॥
इन्दोर्मिथुनद्वयान्ते स्वक्रान्ति: स्याद्दिवाकरक्रान्ते: ।
ऊना यावन्नावत्तावन्नवोऽन्यथा ज्ञेय: ॥८॥
अयनान्यत्वेऽर्केन्दो: क्रान्त्या साम्ये भवेद्व्यतीपात: ।
एवं गोलान्यत्वे वैधृतसमयो ग्रहीतव्य: ॥९॥
रविशशिमानैक्यार्धात् षष्टिगुणाद् गतिविशेषभक्ताप्तम् ।
लब्धस्थितिदलघटिका मध्यं हीना समाद्यन्तौ ॥१०॥

त्रिनवग्रहेन्दुक्रान्तिर्मेषतुलादौ दिवाकरक्रान्तेः ।
ऊना यावद्भावस्तावद्भावोऽन्यथा ज्ञेयः ॥११॥
व्यतिपातोऽपक्रमयोर्दिक्साम्ये वैधृतं दिगन्यत्वे ।
अधिकोनः कल्प्यो दिग्भेदेऽपक्रमः शशिनः ॥१२॥
मेषतुलादाविन्दोरपक्रमे रव्यापक्रमादूने ।
एष्यत्यधिकेऽतीतो विपरीतं कर्किमकरादौ ॥१३॥
क्रान्त्योर्यतिरन्यदिशोरेकदिशोरन्तरं व्यतीपाते ।
एकदिशोर्यतिरन्यदिशोरन्तरं वैधृतं प्रथमः ॥१४॥
एवं द्वितीयराशिर्यतिष्टोनैरिष्टघटिकाः स्वफलैः ।
एष्यमतीतं वा यदि राशिद्वयमपि तदन्तरकम् ॥१५॥
छेदोऽन्यथा तदैक्यं पातस्येष्टघटिका प्रथमराश्योः ।
फलघटिकाभिर्मध्यं द्वयोरपि प्रथमराशिवशात् ॥१६॥
असकृत्कर्मभिरेभिः पातकालः स्फुटः कार्यः ।
तात्कालिकैर्ग्रहैरसकृदिष्टघटिकाफलोनयुक्तैस्तैः ॥१७॥
प्राग्वत् प्रथमे छेदः प्रमाणयोर्द्वेलिमानाम् ॥
इष्टघटिकागुणानामसकृत् फलनाडिकाभिराद्यन्तौ ॥१८॥
कालस्यास्य यथावत् पातस्यैवं स्फुटं ज्ञेयम् ।
व्यतिपातवैधृतानयनमन्यतन्त्रेषु न ग्राह्यम् ॥१९॥
रविबिम्बमेकमार्गो शशिबिम्बोऽपक्रमो भवति यावत् ।
तावत्फलं तदुक्तं तदभावे तत्फलाभावः ॥२०॥
खण्डखाद्यकमिदं त्वसमग्रं ग्रहगतिस्तुधार्तानाम् ।
शिष्याणां हितार्थं प्रोक्तं जिष्णुसुतब्रह्मगुप्तेन ॥२१॥

## एकादशाध्याये

भट्टोत्पलपठितः परिलेखाध्यायः—

सूर्ये चन्द्रे जह्यात् स्फुटतिथ्यन्तं भवेदेव ।
लिप्तिकाः कृत्वा विवरं तद्ग्रस्तं कारयेत्तिथिगते वा ॥१॥

गम्येऽपि पुनस्ताभ्यां समलिप्तौ कारयेत् प्राग्वत् ।
दिनगतशेषाल्पयुतं स्पर्शयुतं दिनं दिनार्द्धहृतम् ॥२॥
अङ्गुलविलिप्ता तुल्यैर्यैवोदरराङ्गुलैः षड्भिः ।
ग्राह्यग्राहकदलात् समासविक्षेपलिप्तिकाभेदः ॥३॥
अङ्गुललिप्ता त्रिज्या वलनज्यानां भवेदिष्टः ।
ग्राह्यसमासव्यासाङ्गुलार्द्धाङ्गुलेन कर्कटेनोर्व्याम् ॥४॥
वृत्तत्रितयं कृत्वा तस्मिन् दिक्साधनं कुर्यात् ।
तत्तिथिगतकेन्द्रज्यावधोवरतः (?) शशिनवेन्दुगुणाः ॥५॥
क्षयधनहानिः प्राक्पश्चादन्यथारवेरिन्दोः ।
इन्दोर्वसुनववेदैस्त्रिज्याक्तितिलब्धविकलितः प्राक् ॥६॥
पश्चादभ्यधिकोकः सकृदथोन्यथेन्दुर्धनहीनः ।
प्राग्वत् पश्चावगतौ धनक्षयक्षयधनानि प्राक् ॥७॥
केन्द्रज्याकरणे यौ गुणकारौ रविचन्द्रयोस्ताभ्याम् ।
केन्द्रगतौ सङ्गुणिते खखनन्दहृते गतिज्ये(?)स्तः ॥८॥
तद्विवरा(?)त्तिथ्यन्ते प्राक्तिथ्यन्ते नियोजयेदधिके ।
प्राक् प्रभृतोन्दोः पश्चादर्कस्य दिशः स्ववलनजीवाभिः ॥८॥
विक्षेपा विपरीताश्चन्द्रस्य यथादिशं सवितुः ।
सूर्यस्य ग्रहणे शशिनो मोक्षे विपर्ययाद्वलना ॥१०॥
देया शशिनो ग्रहणे मोक्षे सूर्यस्य चानुलोमेन ।
व्यासार्द्धे वलनज्या देया यावत् समाप्यते यत्र ॥११॥
यस्मात् मध्यं यावद्रेखां नीत्वा तया तत्र ।
संयोगस्तस्मादपि मानैक्यार्द्धे पृथक् स्वविक्षेपात् ॥१२॥
ग्राह्यो विक्षेपाग्रात् परिलेख्यो ग्राहकार्धेन ।
तीक्ष्णकिरणस्य मध्यग्रहे दिशं दक्षिणोत्तरं ज्ञात्वा ॥१३॥
विक्षेपवशात् तस्यां वलना देया विपर्ययाच्छशिनः ।
प्रग्रहमोक्षानुगतां तदग्रतो मध्यगां रेखाम् ॥१४॥
नीत्वा विक्षेपमितं सूत्रं निःसारयेत् प्रतीपेतत् ।
मध्ये कृत्वा ग्राह्यं परिलेख्यो ग्राहकार्धेन ॥१५॥

प्रग्रहमोक्षग्रासाद् भूपरिलेखे भवत्येव ।
*पश्चात्प्रग्रहणे प्राङ् मोक्षे रविबिम्बमध्यतो बाहुः ॥१६॥
स्ववलनसिद्धज्यादिशि विपरीतः शीतकरमध्यात् ।
भानुमतो बाह्वग्राद्यथादिशं कोटिरन्यथा शशिनः ॥१७॥
रविशशिमध्यात् कर्णस्तिर्यक् कर्णाग्रे कोटियुतेः ।
परिलेखं ग्राह्यस्य ग्राहकमानेन पूर्ववत् कृत्वा ॥१८॥
तत्कालिकसंस्थानं निमोलनोन्मोलनेऽप्येवम् ।
आद्यन्तयोः सधूम्रः कृष्णः खण्डग्रहेऽर्द्धतोऽभ्यधिके ॥१९॥
ग्रासः कृष्णस्ताम्रः सर्वग्रहणे कपिलवर्णः ।
द्वादशभागादूनं ग्रहणं तैक्ष्ण्याद्रवेरनादेश्यम् ॥२०॥
षोडशभागादिन्दोः स्वच्छत्वादधिकमादेश्यम् ।
पादोनरविभार्द्धाच्चक्रादूनाधिकाः कला भक्ताः ॥२१॥
तद्गति(?)युत्याप्तदिनैरासन्ने ऽर्कमासान्ते ।
पर्वेन्दोः पश्चान्ते प्रागधिकोनायुतिर्भवति पश्चात् ॥२२॥
चन्द्रस्य दिग्विपरीतं मध्यग्रहणं यदि भानोः पञ्चजिनखभरसाः ।
इन्दोः विषया हियमाः खाभ्रयो गृहाद्यथेष्टपर्वगुणाः ॥२३॥
क्षेप्याः पर्वण्येष्ये(?) पातेऽन्यथाऽतीते ।
ग्रहणे यदा रवीन्दोः स्पष्टीकरणाद्यमुक्तवत् कृत्वा ॥२४॥
एवं पर्वज्ञानं ग्रहणज्ञानं स्फुटं गणितात् ।

इति खण्डखाद्यके महाकरणे सूर्यचन्द्रग्रहणाधिकारविधिः
सम्पूर्णम् । शुभमस्तु ।

---

* ब्राह्मस्फुटसिद्धान्तान्तर्गत-षोडशाध्यायस्थाः १६श-१८श-श्लोका वीक्ष्य ।

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३२ | ६ | पीतः | पातः |
| ६४ | २८ | भागद्वयेन | सार्द्धभागद्वयेन |
| १२० | ४ | अथातो उदयास्तमताध्यायो | अथात उदयास्तमनाध्यायो |

एतद्व्यतिरिक्ता अशुद्धयो या उपलप्स्यन्ते ताः सर्व्वा विद्वद्भिः कृपया मर्षणीयाः शोधनीयाश्च ।